# भूमिका

अयं खलु निबन्धस्तर्कभाषेत्याख्यया ख्यायमानः सौगतदर्शननिष्ठानां भवत्यादरपात्रम्, तद्दर्शनं जिज्ञासमानानां प्रमाणप्रमेयस्वरूपे समवगमयन् भवत्युपकारकश्च। प्रवर्तते च प्रमाणप्रमेययोः प्रमाणांशनिरूपणप्राधान्येन। प्रत्यक्षं स्वार्थानुमानं परार्थानुमानं च निरूपयन् परिच्छेदैस्त्रिभिरुपकलितोऽयम्। तृतीयपरिच्छेदान्ते च सुगतसार्वज्ञ्यसमर्थनपूर्वकं वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकानां मतभेदा निर्वाणसौधनिःश्रेणितया सौगतैरादृतः क्रमात् संक्षिप्य प्रतिपादितः। विषयाश्चास्य निबन्धस्य विशिष्य विषयसूच्यां प्रदर्शिताः। निबन्धस्यास्य कर्ता मोक्षाकरगुप्त इति निबन्धावसाने दृश्यमानेन ' इति **श्रीमद्राजजगद्दलविहारीयमहायतिभिक्षुमोक्षाकरगुप्तविरचितायां तर्कभाषाया**मित्यनेन कर्तृनामोल्लेखेन विज्ञायते। आरंभे च ' गुरुं लोकेश्वरं नत्वा बालानां धर्मकीर्तिना। शीलनायाल्पचित्तानां तर्कभाषा प्रकाश्यते ' इति मङ्गलश्लोकपाठ एतद्ग्रन्थप्रकाशनायादर्शतया परिगृहीतेषु पुस्तकेष्वेकस्मिन् समुपलभ्यते। अपरेषु तु आरंभांशो गलितः। अस्मिन्नेव निबन्धे तत्र तत्र स्वोक्तार्थे प्राचां वचनेन संवादयता ' आहाचार्यः ', ८-१६ ' दिङ्मण्डलविख्यातकीर्तिः कीर्तिः ' ३२-२ ' कीर्तिपादैरप्युक्तम् ' ३८-१३ इति धर्मकीर्तिर्निर्दिश्यते। तस्मात् मंगलश्लोके ' धर्मकीर्तिना ' इति नामनिर्देशो न विस्रम्भमर्हति। तत्र च कारणं टिप्पण्यां स्पष्टीकृतमस्माभिः। अनुगच्छति चायं निबन्धमिमं रचयन् प्रमाणनिरूपणांशे न्यायबिन्दुं तट्टीकां च धर्मोत्तराचार्यविरचिताम्। अन्तः प्रविश्य पश्यतां प्रकाशेतैतत्। तस्यास्य ग्रन्थकर्तुर्देशकालनिर्णायकं लिङ्गं निबन्धशरीरे व्यक्तमलभमानानामस्माकं दृष्टिः 'श्रीमद्राजजगद्दलविहारीयमहायतिभिक्षुमोक्षाकरगुप्तविरचितायां तर्कभाषायां परार्थानुमानपरिच्छेदः समाप्तः ' इत्यस्मिन् निबन्धावसानस्थलेखे न्यपतत्, अथ राजजगद्दलविहारः क्वासीत् कदाऽऽसीदित्येतद्विमृशतामस्माकं दृक्पथं प्रापिता महामहोपाध्याय श्रीहरप्रसादशास्त्रिभिर्विरचिता सन्ध्याकरनन्दीयरामचरितप्रस्तावना (Memoirs of the Asiatic Society of Bengal, Introduction P. 14) वडोदराराजकीयप्राच्यविद्यामन्दिराध्यक्षैः डाक्टर श्रीविनयतोषभट्टाचार्यमहाशयैः. (Director, Oriental Institute, Baroda) तां प्रस्तावनामवलम्ब्यायं निर्णयः प्रकाश्यते—

अयं हि राजजगद्दलविहारः उत्तरवङ्गेषु वरेन्द्रदेशे गङ्गाकरतोयासंगमपवित्रिते रामावतीनगरे रामपालेन राज्ञा प्रतिष्ठापितः। रामपालस्य राज्यनिर्वहणारम्भसमयस्तु क्रैस्तैकादशशतकस्यान्तिमो भागः ( 1080 A. D. ) इदं च नगरमचिरेणैव कालेन विविधदेवीदेवालयैः समलङ्कृतं समलङ्कृतं चोद्यानैर्विविधदेशीयपण्यद्रव्यभूयिष्ठैरापणैश्च सुपरिष्कृतमभूत्। आसीच्चास्मिन्नगरे अवलोकितेश्वराभिख्यस्य बोधिसत्त्वस्यार्चामूर्तिः। अस्य विहारस्य निर्माणारम्भसमयः प्रायः क्रैस्तद्वादशशतकस्य पूर्वो भागो भवितुमर्हति। प्रथितश्चाभूत् पुरा भारते विहारोऽयम्।

अस्मिन् विहारे महाविद्यालयः कश्चन प्रतिष्ठितोऽभूदिति च विज्ञायते। बहवः पण्डिता भिक्षवोऽस्मिन् विहारे आसन्।

तेषु चत्वारः सुप्रथिताः—विभूतिचन्द्रो दानशीलः शुभाकरगुप्तः मोक्षाकारगुप्तश्चेति। तेषु विभूतिचन्द्रः टिबटन्–भाषायामपि निष्पन्नपाण्डित्यः कांश्चन सौगतसंस्कृतग्रन्थान् टिबटन्-भाषात्मना पर्यवर्तयत्। तथैव दानशीलोऽपि। तावेतौ दृष्टटिबट्देशौ। शुभाकरगुप्तस्य शुभंकरगुप्त इत्यासीत्प्रथा। अयं रामपालसमयात् क्रैस्तैकादशशतकान्तिकमभागतोऽप्यासीत्। अनेन राजजगद्दलविहारे निवसता सिद्धैकवीरतन्त्रटीकाख्यो निबन्धो व्यरचि।

अनेन च मोक्षाकरगुप्तेन सेयं तर्कभाषा व्यरचि, सेयं तर्कभाषा भिक्षुश्रीमत्स्थिरमतिना टिबटनभाषया भाषान्तरीकृता। विज्ञायते च महामहोपाध्यायश्रीसतीशचन्द्रविद्याभूषणविरचिते भारतीयतर्कविमर्शे (History of Indian Logic pp. 346-347) तथा च श्रीफणीन्द्रनाथवसुविरचिते 'बौद्धविहारेषु भारतीयपण्डिता' इत्यस्मिन् निबन्धे।

विहारश्चायं क्रैस्तत्रयोदशशतके वङ्गदेशे समुपजातेन महम्मदीयाक्रमणेन प्रक्षीणदशां प्रापद्यत। व्यलीयत चेयं तर्कभाषा। अथ कालेन पाटणस्थजैनपुस्तकभण्डागारे सुरक्षिता-मातृकाऽस्याः समलभ्यत। यैवास्याः प्रकाशनकार्मण्यस्मिन् प्राधान्येन समादृता, समासादिता च वडोदराराजकीयप्राच्यविद्यालयाध्यक्षैः।

समयश्चास्य वाचस्पतिमिश्राणां समयतः (८९८ शक) पश्चात्तन एवेति 'यदपि वाचस्पति-राहेति वाचस्पतिमतानुवादाद्व्यक्तं निबन्धशरीर एव विज्ञायते। इतः प्राक्तन इति तु न तथा निर्धारणमुपलभामहे।

अस्मिन्निबन्धे स्वोक्तार्थसंवादायोपात्तेषु वचनेषु 'विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते'। इत्येतद्वचनं ( १० ) तत्त्वसंग्रहे ( ९९९ ) दृश्यते। अयं चेदं न्यायवदिन इति निर्दिशति। किमयं तत्त्वसंग्रहकारं न्यायवादीति गौणेन नामान्तरेण निर्दिशति उतान्यमेव, यद्यन्यः स्यात्, अन्यस्य वचनं शान्तरक्षितेन स्वकृतौ सङ्कलितमिति वक्तव्यमापतेत्। विमर्शपदमिदमेकमत्र।

अयं निबन्धकारः परार्थानुमाननिरूपणप्रकरणे हेतुदोषान्निरूपयितुं प्रवृत्तः यथानिर्देशं प्रथममसिद्धं निरूपयन्, तत्प्रसङ्गेन सामान्यं विचारयन्नपोहसमर्थनसंरम्भेण विरुद्धमनैकान्तिकं निरूपणीयं व्यस्मरदिति नः प्रतिभाति। अनैकान्तिको यद्यपि लेशतः प्रसङ्गेनोपात्तः विरुद्धस्तु न लेशतोऽपि। यद्विभजनप्रकारे दिङ्नागधर्मकीर्त्योरल्पीयानभिप्रायभेदो विज्ञायते। निबन्धस्याभ्यन्तरांशविमर्शनाय नायमवसरः।

अस्य निबन्धस्य व्याख्या काप्येषा व्यरचि मया महतामादेशमनुपालयता। व्याख्यां विरचयतो मम न्यायबिन्दुस्तस्य टीका चाचार्यधर्मोत्तरविरचिता प्राधान्येनावलम्बनमभूत्। तत्त्वसंग्रहः प्रमाणसमुच्चयो न्यायप्रवेशश्च तत्रतत्रांशतः॥

अस्य निबन्धस्य संशोधनार्थमाहृतानि पुस्तकानि चत्वारि, ( N. 13149 क. N. 13150 ख. N. 5261 ग. N. 7629 घ. ) तानि चत्वार्यपि वडोदरा नगरस्थ-राजकीयप्राच्यविद्यामन्दिरत एव संपादितानि। तेषु. क. संज्ञकं ख. संज्ञकं च प्रायः शुद्धम्, तयोः क. संज्ञकमारम्भे तत्रतत्र विप्रलुप्तवाक्यम्। ख. संज्ञकं तु आरंभे विप्रलुप्तपत्रत्रयम्, ग. संज्ञकं तृतीयं पुस्तकं क. पुस्तकमादर्शीकृत्य संपादितम्, चतुर्थं तु क. ख. पुस्तकद्वयमादर्शीकृत्य संपादितम्। तानीमान्यवलम्ब्य वडोदराराजकीयप्राच्यविद्यामन्दिर व्यवस्थापकमहाशयानामादेशानुसारेण संशोधितोऽयं निबन्धः पण्डितानां नयनपथमुपेयादित्याशास्यते।

**एंबार् कृष्णमाचार्यः** ( श्रीरंगम् )
(Pandit, Oriental Manuscripts library,)
University of Travancore.

Trivandrum.
Date 3-5-42.

॥ श्रीः ॥

# तर्कभाषा

---

( गुरुं[1] लोकेश्वरं नत्वा बालानां धर्मकीर्त्तिना ।(?)[2]
शीलनायाल्पचित्तानां ) तर्कभाषा प्रकाश्यते ॥ १ ॥

इह प्रेक्षा (परायणार्थिभिः सत्त्वैः सर्वपुरुषार्थसिद्धिनिमित्तं प्रमाणमनुसरद्भिरादौ प्रमाणं निर्णेतव्यम्) प्रमाणं सम्यग्ज्ञानमपूर्वगोचरम्। प्र(मिते तेनार्थे प्रामाण्ये सति [तद्धि[3]] सम्यग्ज्ञानमस्ति, संशयविपर्ययदोषरहितत्वात्। अविसं)वादकं ज्ञानं लोके सम्यग्ज्ञान(मुच्यते। संशयविपर्ययज्ञानस्य त्वविसंवादित्वं नास्ति। यथा शुष्कमिन्धनं न वेति) ज्ञानस्य मरीचिकायामुदका(कारज्ञानस्य च। तद्गोचरापूर्वत्वादपूर्वगोचरम्। [4]गोच[रेतु] तत्स्थाने घटादौ सति तदुत्पन्नं तदर्थ)प्रापणयोग्यं ज्ञानं प्रमाणम्। ननु ज्ञानं कर्तृ पुरुषं प्रयोज्यमर्थे कर्मभूतं यदि कदाचिन्न प्राप(यति, तत्प्रापयि[तृत्वा[5]]भावात् कथं प्रमाणमिति चेत्। उच्यते, न ज्ञानेन पुरु)षो गले पादुकान्यायेन बलादर्थे प्रवर्त्तयितव्यः। अपि त्वेवं(भूतेऽस्मिन् वस्तुस्वभावे तदाकारः परस्मिन्नास्तीति तेनाकारेण निश्चयः कर्त्तव्यः।) स चेत्तेन कृतः, एतावतैव प्रामाण्यमविरुद्धम्। पुरुषस्तु तत्र (प्रयोजनवशात्प्रवर्त्तत एव प्रयोजनाभावे नैव प्रव-

---

१. आदितः प्रायः पत्रचतुष्टयपरिमितः 'गुरुं लोकेश्वरमि' त्यादिः 'द्विविधवचनेन एकं त्रीणि' इत्यन्तो ग्रन्थः ख. पुस्तके विच्छिन्नो नोपलभ्यते। क. पुस्तके जीर्णपुस्तकतश्छायाप्रतिकृत्यात्मना संपादिते प्रायः प्रथमतः पत्रचतुष्टये तत्र तत्र पङ्क्तयो मूलपुस्तके पत्रणां जीर्णतादोषेण नोपलभ्यन्ते। यन्मूलपुस्तकमवलम्ब्य क. पुस्तकं छायाप्रतिकृत्यात्मकं संपादितं तदेव मूलपुस्तकमवलम्ब्य संपादिते. ग. लेखपुस्तके. अनुपलब्धांशपूरणं पश्चात् किञ्चित्पुस्तकमवलम्ब्य संपादितम्, यतः पुस्तकादापूरणं कृतं तच्च पुस्तकं नोपलब्धमस्माभिः। केनापि विपश्चिता स्वबुद्धिबलेनापूरणं कारितमिति संभाव्यते, तस्मादापूरणवाक्येषु साक्षान्निबन्धकारवाक्यत्वे न निश्चय इत्यत्रास्माभिरापूरणांशज्ञापनाय तस्यापूरणवाक्यस्य कुण्डलितरेखाद्वयान्तर्विन्यासः कृतः।

२. इदमशुद्धं प्रतिभाति।

३. तदपि. ग. पाठः

४. गोचरस्तु ग. पाठः

५. यित्रभा. ग. पाठः अत्र कुण्डलनान्तर्गतापूरणांशः समधिकपदतया ख. पुस्तके या आपूरणीयस्थानतया असंक्रान्ताक्षरा शून्या पंक्तिरुपलभ्यते तत्र समावेशं नार्हति, तत्, तदानुगुण्येन तु प्रापयित्रभावादिति पदमधिकं प्रतिभाति। विनाऽपि तत्पदं विवक्षितार्थः सुगमः।

र्यते । तत्रापि योगि)पिशाचादिभिरपह्रियताम् । तदा ज्ञानस्य किमायातम् । यत्तु (विसंवादित्वेन[1] ज्ञानस्याप्रामाण्ये दर्शनमविसंवाद्येवार्थप्रापणादस्ति । यद्दृश्यते तत्प्राप्यतेऽपि । अक्षणिकत्वात् । रूपं तु दृश्यते स्पर्शः प्राप्यते । तस्मादन्यद्दृष्ट्वाऽन्यस्मिन्प्राप्यमाणे निर्धारणं नास्ति । प्रापणात्कथं प्रामाण्यं भवतीति चेन्न । वस्तुतोऽन्यप्राप्तिर्गृह्यते । ननु पश्यत एवाहं प्राप्नोमीति चिन्तायामेकमतिरिक्तमिति चेत् । अस्माभिर्निर्धारणं प्राप्तिरुच्यते । यत्तु मरीचिकादावुदकादिविज्ञानं तस्यार्थप्रापणायोग्यत्वादप्रामाण्यमेव ।) नन्विदं प्रापणयोग्यमिदं नेत्यर्थक्रियाप्राप्तिमन्तरेण नि(श्चयेऽशक्ये ज्ञानस्यैवोदयाद्भ्रमाभ्रमत्वेन विशेषो न नि)र्धार्यते ततः कथं तत्सम्यग्ज्ञानमिति चेत्, नैष दोषः । (ज्ञानस्यैवोदयात्तद्विशेषो न निर्धार्य)ते । तथाऽपि ज्ञानविशेषोदयाद्यथैकस्य वैशिष्ट्यं त(था निर्दिश्यते । तथा च मन्दबुद्धिर्जातिवशादविसंवाद)कत्वं ज्ञानस्य नावधारयितुं समर्थः । तथाऽपि दाहपाक(धूपनलेपादिक्रियां दूराज्ञिश्चिनोति । सुविज्ञातपुरुष)स्य दर्शनेनोच्छलद्धूमादिदर्शनेन च । अमन्दबुद्धिस्तु (प्रकाशप्रत्यक्षेणैव निर्धारयति । ननु यद्यर्थक्रियाप्रापणादविसंवादिलक्षणवतो लक्षणमस्ति तदा श्रवणविज्ञानस्य निर्धारितार्थप्रापणाकरणात्कथं प्रामाण्यमिति चेन्न । अर्थस्वभावनिर्धारणस्य प्रामाण्ये तस्य बाह्यार्थक्रियाप्रापणाभावेऽपि कदाचित्सत्त्वात् । यदुक्तम्–

‘ प्रामाण्यमविसंवादि ज्ञानमर्थक्रियास्थितम् ’

अविसंवादीति । शब्दाकर्णनमात्रेणार्थविचारग्रहात्समानैव तत्रार्थक्रियास्थितिः । यथा चन्द्रसूर्यमेघचित्रादीनि दृष्ट्वैवार्थक्रियास्थितानि भवन्ति । तदुक्तम्–

‘ ज्ञेयस्वरूपविद्यैव तत्रेष्टार्थक्रियास्थिता ’

---

१. ‘ विसंवादित्वेने ’ त्यादिः ‘अप्रामाण्यमेवे’ त्यन्तो ग्रन्थः ग. पुस्तके आपूरितः क. पुस्तके ‘ यत्तु म ’ इत्युपक्रमो दृश्यते, ततः परमर्धं पङ्क्तिमात्रं त्रुटितमसंक्रान्तवर्णं समुपलभ्यते । ततः समनन्तरं तु ‘ नन्विद ’ मित्युत्तरग्रन्थः समुपलभ्यते, तत् क. पुस्तकस्थपूरणीयस्थाने परामृश्यमाने ‘ यत्तु मरीचिकादावुदकादिविज्ञानं तस्यार्थप्रापणायोग्यत्वाद प्रामाण्यमेव ’ इत्येतावदेव वाक्यमापूरणमर्हति । तत–‘ विसंवादित्वेने ’ त्यादि ‘ दृश्यते, यत्तु ’ इत्यन्तः समधिको ग्रन्थः क. पुस्तकपाठाननुगुणः प्रतिभाति । पूर्वोत्तरग्रन्थपर्यालोचनायां चनेयं निबन्धकारकृतिरि‍ति च विज्ञायते । अशुद्धप्रायंच । २ स्नानपानज्ञानेतिं घ पाठः ।

इति । प्रथमतो निर्धारणावान्)र्थक्रियार्थितया [1]जलानलादावर्थसन्देहादेव प्रवर्त्तते । (यदि तत्र तादृशसन्देहाभावे प्रवर्त्तयित्वा वासिद्धिं कारयित्वा वापकारं करोति प्रमाणं नास्ति । यदुक्तम्–' उत्पद्यमानसन्देहो येन निवर्त्तते ' इति) तस्मात्स्थितमेतत् । आसादितनिरन्तरार्थक्रियाव्यवहारणात् (प्रत्यक्षजातमात्रतोऽर्थप्रवृत्तौ मन्दबुद्धिना तादृशानुमा)नादिति । अत एव प्रत्यक्षस्य स्वतः प्रामाण्यम् । कस्य चित्तु परतः । योगिज्ञानस्य स्वसंवेद्यज्ञानस्य च स्वत एव प्रामाण्यम् । अनुमानस्य तु निश्चयात्मकत्वात्स्वत एव प्रामाण्यम् । तेनायमर्थः । प्रथमत एव यद्विज्ञानं प्रवृत्तं विषये तदेव प्रमाणम् । न तु तत्रैव पश्चाद्भावि ज्ञानान्तरमपि । गृहीतग्राहित्वेन तस्याप्रामाण्यात् । यथा घटं निर्विकल्पेन दृष्ट्वा पश्चात्तत्रैव विषये यथा (साध्य)मध्यवसायं घटोऽयमिति सविकल्पकं ज्ञानं स्मरणरूपम् । यथा पर्वतादौ धूमं दृष्ट्वा वह्निरत्रेत्यनुमा(नज्ञा?)नानन्तरं पुनरपि (तत्रैव) वह्निरत्रेत्यनुमानम् । सम्यग्ज्ञानं प्रमाणमित्युक्ते सामर्थ्याज्जडस्वभावस्येन्द्रियादेः परिच्छेदकत्वाभावात्प्रामाण्यं निरस्तम् । परिच्छेदकत्वं हि बोद्धृत्वम् । तच्च ज्ञानस्यैव निजरूपम् । तत्कथमज्ञानात्मन इन्द्रियादेः स्वभावो भवितुमर्हतीति ।

तद् द्विविधं प्रत्यक्षमनुमानं चेति । प्रतिगतमक्षं प्रत्यक्षम् । अक्षं त्विन्द्रियं चक्षुःश्रोत्रघ्राणजिह्वाकायाख्यम् । तस्मादुत्पन्नं ज्ञानं प्रत्यक्षमित्यर्थः । ननु यद्यक्षाश्रितं प्रत्यक्षं तदा वक्ष्यमाण [मानसादावव्याप्तम्] । अत्रोच्यते । प्रतिगतमक्षं प्रत्यक्षमिति यदुक्तं तत्प्रत्यक्ष........ ..........वशादवगन्तव्यम्, पङ्कजवत् ? । ततः स्वसंवेदनादिकमपि ज्ञानादिस्वरूपमर्थं साक्षात्करोतीति प्रत्यक्षशब्दवाच्यं सिध्यतीति । मीयतेऽर्थोऽनेनेति मानम् । अनुः पश्चादर्थे । पश्चान्मानमनुमानम् । लिङ्गग्रहणलिङ्गलिङ्गिसम्बन्धस्मरणयोः पश्चात् यद्विज्ञानं पर्वतादौ धर्मिणि परोक्षवस्त्वालम्बकं तदेवानुमानशब्देनोच्यते इति रूढिशब्दादवगन्तव्यम् । द्विविधवचनेन एकं त्रीणि चत्वारि पञ्च षडिति विप्रतिपत्तयो निरस्यन्ते । तथा हि – प्रत्यक्षमेवैकं प्रमाणमिति चार्वाकः । प्र-

१. जलादर्शादाविति. ग. पाठः ।

त्यक्षमनुमानं शाब्दं चेति साङ्ख्यः। प्रत्यक्षमनुमानमुपमानं शाब्दं चेति नैयायिकः। प्रत्यक्षमनुमानमुपमानं शाब्दमर्थापत्तिरिति प्राभाकरः। प्रत्यक्षमनुमानं शाब्दमर्थापत्तिरुपमानमभावश्चेति मीमांसकः। द्विविधवचनेन द्वित्वे प्राप्ते प्रत्यक्षमनुमानं चेति पुनर्यदुक्तं तदन्यथाद्वित्वनिरासार्थम्। तथा हि वैयाकरणो ब्रूते प्रत्यक्षं शाब्दं चेति प्रमाणद्वयम्। तथा चोक्तम्।

'प्रमाणेतरसामान्यस्थितेरन्यधियो गतेः।
प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचित्॥'

[2]तत्राऽनुमानस्य प्रामाण्यमवश्यमभ्युपगन्तव्यं चार्वाकेणेति प्रतिपाद्यते। तथाहि--सरव..............शलक्षणं परप्रतिपादनाय प्रणयति। परस्य च बुद्धिर्न प्रत्यक्षा। किं तर्हि कायवाग्व्यापारात्कार्यादनुमेया। ततोऽनेन कार्यलिङ्गजमनुमानं बलादभ्युपेतं स्यात्। परलोकनिषेधाय चानुपलम्भाख्यं साधनमाचष्टे। अतोऽसौ स्वयमेवानुमानेन व्यवहरन्नानुमानं प्रमाणमिति च ब्रुवाणः कथं नोन्मत्तः?।

शाब्दं च ज्ञानं बाह्यार्थाविसंवादेन प्रमाणमेष्टव्यम्। अविसंवादकत्वं च सम्बन्धमन्तरेण न सम्भवति। न च शब्दानां बाह्यार्थेन सह कश्चित्सम्बन्धः। तथा हि शब्दार्थयोः सम्बन्धो भवन् तादात्म्यं तदुत्पत्तिर्वा भवेत्। तत्र न तावत्तादात्म्यं शब्दार्थयोः, अत्यन्तभेदेन प्रतिभासनात्। तादात्म्यं ह्येकत्वमभिधीयते। भिन्नप्रतिभासेऽप्येकत्वे स्वीक्रियमाणे गवाश्वयोरप्येकत्वप्रसङ्गः। नापि तदुत्पत्तिरन्वयव्यतिरेकाभावात्तस्मादुत्पत्तिरित्येवं वक्तुं न शक्यते। तथाहि–शब्दव्यापारमन्तरेण स्वहेतोरेव मृत्पिण्डदण्डसलिलचक्रादेः सकाशादुत्पद्यमानो घटादिरर्थो दृश्यते। शब्दोऽपि बाह्यार्थं विनैव पुरुषेच्छामात्रेण ताल्वादिव्यापारादेवोत्पद्यते। अथ तादात्म्यतदुत्पत्तिभ्यामन्य एव [4]वाच्यवाचकभावलक्षणः स्वाभाविकः प्रतिबन्धोऽस्ति। एवं तर्ह्यसङ्केतविदोऽपि प्रमातुः शब्दादुच्चरितान्नियतार्थप्रतीतिः प्राप्ता योग्यतामात्रे-

१. तथा चोक्तमित्यादिः कस्यचिदित्यन्तः, क. पाठः। स चानुमानप्रामाण्यसमर्थनपरः उत्तरत्र 'कथं नोन्मत्तः' इत्यस्यानन्तरं समुचितः। २. तथा क. पाठः। ३. परंसाच ग. पाठः। ४. वाच्यवाचकलक्षणः ख. पाठः।

णैव प्रदीपाद्घटपटादिप्रतीतिवत् । तथा हि – अभिनवनालिकेरद्वीपायातः प्रमाताऽग्निशब्दं श्रुत्वाऽप्यग्निशब्दान्न कश्चिदर्थं[1] प्रत्येति । अथ तांस्तान् सङ्केतानपेक्ष्य तदर्थप्रत्यायनयोग्य एवायं शब्दो जात इत्युच्यते । तन्न । न ह्येवमस्य प्रामाण्यमवतिष्ठते सर्वत्र सङ्केतस्य योग्यत्वात् । अतो न ज्ञायते किं विवक्षितमर्थमाहाऽन्यं वेति । अस्तु वाऽन्य एव कश्चित्सम्बन्धः । तथा च सोऽपि केन सम्बन्धेन तयोः सम्बद्ध इति प्रष्टव्यम् । अन्येन चतुर्थेन सम्बन्धेनेति चेच्चतुर्थोऽपि केन तत्सम्बद्धः । पञ्चमेन केन चिच्चेत् सोऽपि केनेति अनवस्थायामन्त्यासिद्धौ पूर्वेषामसिद्धिः स्यात् । अर्थासम्बद्ध एव शब्दार्थयोः सम्बन्ध इति चेत् । योऽसम्बद्धः स कथं सम्बन्धो भवति घटस्येव पटः । अथ वक्तव्यम् । सम्बन्धस्य ईदृश एव स्वभावो येन सम्बन्धान्तरनिरपेक्ष एव परं सम्बध्नातीति । तदयुक्तम् । प्रमाणसिद्धे हि वस्तुनि स्वभावेनोत्तरमभिधीयते । यथाऽग्नेरेवायमीदृशः स्वभावो दाहकत्वं नाम नान्यस्याकाशादेः । सम्बन्धसिद्धौ तु प्रमाणं किञ्चिन्निरूपयन्तो न पश्यामः । न चैवं वक्तव्यम् – शब्दशक्तिस्वाभाव्यादेव शब्दानां नियतार्थाव्यभिचारित्वम् , तथा हि यदि घट इत्ययं शब्दः स्वभावादेव कम्बुग्रीवाकारं जलधारणसमर्थं पदार्थमभिदधाति , तत्कथं सङ्केतान्तरमपेक्ष्य पुरुषेच्छया तुरगादिकमभिदध्यात् । न हि शालिबीजं स्वहेतोरङ्कुरजननस्वभावमुत्पन्नं सङ्केतान्तरमपेक्ष्य गर्दभं जनयितुं समर्थं स्यात् । नाप्यासप्रणीतशब्दानां प्रामाण्यमभिधातुमुचितम् । तथा हि, आसत्वं क्षीणदोषत्वमुच्यते । क्षीणदोषता च परचित्तवृत्तिः काचिदभिधीयते । परचित्तवृत्तीनां च दुर्लक्ष्यत्वात्, कायवाग्व्यापारस्य कार्यलिङ्गस्य त्वन्यथाऽपि सन्दर्शनात् । सरागा अपि वीतरागा इव चेष्टन्त इति न्यायात् कथमा[2]सत्वं विनिश्चीयतामिति । सम्बन्धदूषणेन च वैदिकशब्दानां प्रामाण्यं निरस्तमिति पृथङ्नोक्तम् । कथं तर्हि सर्वोऽयं निःसन्दिग्धो लौकिको व्यवहार इति चेत् । तथा तथा सङ्केतेन विवक्षावशान्न काचित्क्षतिः । यथोक्तम्--वक्तुरभिप्रायं सूचयेयुः शब्दा इति ।

नैयायिकस्योपमानप्रमाणप्रपञ्चः – यः प्रतिपत्ता गां वेत्ति न गवयं स चादिष्टः स्वामिनाऽरण्यं गत्वा गवयमानयेति, स गवयशब्दवाच्य-

१. भवितुमर्हति ख. पाठः । २. मत्राप्रत्वं ख. पाठः ।

मर्थमजानानो वनेचरमन्यं वा तज्ज्ञं पुरुषं पृष्टवान् भ्रातः कीदृशो गवय इति, स आह यादृग्गौस्तादृग्गवय इति। तस्यारण्यगतस्य प्रेष्यपुरुषस्य आप्तातिदेशवाक्यार्थस्मरणसहकारिगवयसारूप्यज्ञानं कर्तृ अयं स गवयशब्दवाच्योऽर्थ इति प्रतिपत्तिं फलरूपां जनयत्प्रमाणम्। एतच्चायुक्तम्। यतः प्रामाण्यं नाम विषयवत्तया व्याप्तम्। न चास्य निपुणमपि निरूपयन्तो विषयं पश्यामः। तथा हि समाख्यासम्बन्धस्तस्य विषयो वर्ण्यते। स च परमार्थतो नास्ति। दृश्यत्वे तस्यानुपलम्भेन बाधा। अदृश्यत्वे तस्य सत्तासाधकं प्रमाणं नेक्ष्यते। किंञ्च। स हि सम्बन्धः सम्बन्धिभ्यां भिन्नोऽभिन्नो वा। यदा भिन्नस्तदा तयोः सम्बन्धः केन सम्बन्धेनेति वाच्यम्। सम्बन्धान्तरकल्पनायामनवस्था। अंथाभिन्नस्तदा सम्बन्धिनावेव केवलौ। न समाख्या नाम सम्बन्धः कश्चित्। अथ सम्बद्धबुद्धिजनकत्वं सम्बन्धः। तन्न युक्तम्। यतः सम्बद्धावेताविति बुद्धिः स्वहेतुबलात्सम्बद्धवस्तुद्वयादपि सम्भाव्यमाना न सम्बन्धान्तरमाक्षेप्तुं प्रभवति।

एवं मीमांसकोपवर्णितस्यापि प्रामाण्यं निराकर्त्तव्यम्। तथा हि सादृश्यविशिष्टः पिण्डः पिण्डविशिष्टं वा सादृश्यमुपमानस्य विषयस्तेन वर्ण्यते। न च सदृशवस्तुव्यतिरिक्तं सादृश्यं व्यवस्थापयितुं शक्यते प्रमाणेनाप्रतीतत्वात्। तथा हि – यदि सदृशादतिरिक्तं सादृश्यं दृश्यं स्यात् तदा दृश्यानुपलम्भग्रस्तमेव तत्। अथादृश्यम्। तदपि तत्प्रतिबद्धलिङ्गाभावादनुमानादपि कथं तत्सिद्धिः। सादृश्यप्रत्ययस्तु स्वहेतोस्तथोत्पन्नेन सदृशवस्तुनाऽपि क्रियमाणो घटत इति न तत्प्रत्ययादपि तत्सिद्धिर्युक्ता। उपमानादेव सादृश्यसिद्धिरिति चेन्न। यतः प्रमाणान्तरसिद्धयोरेव सादृश्यपिण्डयोर्यो विशेषणविशेष्यभावस्तस्योपमानविषयत्वं तेन वादिना परिकल्प्यते। तत्कथं सादृश्यमात्रस्योपमानासिद्धिरिति।

अर्थापत्तेरपि प्रामाण्यं पृथङ्नोपपद्यते। तथा हि – प्रत्यक्षादिप्रतीतो योऽर्थः स येन विना नोपपद्यते तस्यार्थस्य कल्पनमर्थापत्तिरित्यर्थापत्तेर्लक्षणम्। अत्रेदं चिन्त्यते। योऽसौ प्रमाणदृष्टोऽर्थस्तस्य यदि परिकल्प्यमानेन परोक्षेणार्थेन सह कश्चित्तादात्म्यलक्षणस्तदुत्पत्तिलक्षणो वा प्रतिबन्धोऽस्ति तदा स्वभावलिङ्गजा कार्यलिङ्गजा वाऽसौ

प्रतीतिरनुमानमेव । अथ नास्ति प्रतिबन्धः, तदाऽर्थापत्तिः प्रमाणमेव न भवति । असम्बन्धात् । घटात्पटप्रतीतिवत् ।

अभावस्य स्वरूपमेव न वीक्षामहे, कुत एव तस्य प्रामाण्यं भविष्यति। तथा हि – प्रत्यक्षादीनामनुत्पत्तिरभावाख्यं प्रमाणं मीमांसकैरभिधीयते । तत्र केयमनुत्पत्तिः? । किं प्रसज्यवृत्त्या प्रमाणानुत्पत्तिमात्रमथ पर्युदासवृत्त्या वस्त्वन्तरम्? । वस्त्वन्तरमपि जडरूपं ज्ञानरूपं वा? । ज्ञानमपि किं ज्ञानमात्रमेक[1]ज्ञानसंसर्गिवस्तुनो ज्ञानं वा? । तत्र न तावत्प्रसज्यरूपोऽभावो युज्यते । तस्य सर्वशक्तिशून्यत्वात्परिच्छेदकत्वं ज्ञानजनकत्वं वा[2] कथं भविष्यति? । अत एव केनापि तत्प्रतिपद्येतेति । यदाह पण्डितचक्रचूडामणिः न न ह्यभावः कस्य चित्प्रतिपत्तिः प्रतिपत्तिहेतुर्वा । तस्यापि कथं प्रतिपत्तिः [इति] । नापि जडरूपं जडस्य परिच्छेदकत्वाभावात् । न हि जडरूपं शकटादिकं घटं परिच्छिनत्तीति क्वापि दृष्टं श्रुतं वेति । नापि ज्ञानमात्रं देशकालस्वभावविप्रकृष्टस्य सुमेरुशङ्खचक्रवर्त्तिपिशाचादेरपि ज्ञानमात्रादभावप्रमाणादभाव[प्रतीति]प्रसङ्गात् । अथैकज्ञानसंसर्गिभूतलादिवस्तुज्ञानमभावोऽभिधीयते तदा प्रत्यक्षविशेषस्यैवाभावप्रमाणनामकरणान्नास्माकं काचिद्विप्रतिपत्तिरिति । स्थितमेतत् । प्रत्यक्षमनुमानं चेति द्विविधमेव प्रमाणम् । तत्र प्रत्यक्षं कल्पनापोढमभ्रान्तम् । पूर्वापरमनुसन्धाय शब्दसंयुक्ताकारा प्रतीतिरन्तर्जल्पाकारा वा कल्पना । तथाचोक्तम् -- अभिलापसंसर्गयोग्यप्रतिभा सा प्रतीतिः कल्पना । यथा विज्ञस्य पुरुषस्य सोऽयं घट इति प्रतीतिः । बालमूकादीनामन्तर्जल्पाकारं कल्पनाज्ञानमस्तीति कुतो निश्चेतव्यम्? । [3]विकल्पकार्यस्येष्टानिष्टोपादानपरिहारस्योदयात् । दृष्टं चेदं कार्यं बालकादौ, ईप्सितार्थस्वीकरणमनीप्सितार्थत्यजनं च नाम। किं पुनः कारणं कल्पनाविभ्रमात्मकं ज्ञानं न प्रमाणमिति चेत् । अर्थस्वरूपसाक्षात्कारि हि ज्ञानं प्रत्यक्षं सर्वेषां सम्मतम् । न च कल्पनाविभ्रमावर्थं साक्षात्कर्त्तुं समर्थौ । तथा हि –अर्थग्राहकं ज्ञानमर्थस्य कार्यम् । अर्थो हि ग्राह्यत्वात् ज्ञानस्य का-

१. ज्ञान ज्ञान क. ग. पाठः । २, ख. पाठे. वाकारोनास्ति । ३ विकल्पकार्योदयादिष्टानिष्टोपादानपरिहारात् । ख. पाठः ।

रणम् । यथाचोक्तम् – 'ग्राह्यतां विदुः । हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षम'मिति । कल्पनाज्ञानं त्वर्थमन्तरेण वासनामात्रादेवोपजायमानं कथमर्थकार्यं स्यात् । अर्थेन सहान्वयव्यतिरेकाभावात् । न हि यदन्तरेणापि यद्भवति तत्तस्य कार्यमतिप्रसङ्गात् । यदि पुनः कल्पनाज्ञानमर्थादुपजायेत तेनापि तदा घटादिरर्थो दृश्येत । ततश्चान्धस्यापि रूपदर्शनप्रसङ्गः । न चास्ति । अतएवोक्तम् – शाब्द्यां बुद्धावर्थस्य प्रत्यक्ष इव प्रतिभासाभावान्नास्ति कल्पनाया अर्थसाक्षात्कारित्वमिति सिद्धम् । एतेन, यदुक्तं साङ्ख्येन ? [भर्तृहरिणा]

' न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ '

तन्निरस्तम् । तथाहि घटे पुरोवर्त्तिन्युच्चार्यमाणे तत्समीपवर्त्ति भूतलादिज्ञानमुच्चारणरहितमनुभूयत एव । न च तत्र शब्दानुगमोऽस्ति । न विकल्पद्वयं सकृदिति न्यायात् । भ्रान्तमपि ज्ञानं नार्थसाक्षात्कारि । भ्रान्तं ह्यर्थक्रियाक्षमे वस्तुनि विपर्यस्तमुच्यते । अर्थक्रियाक्षमं च वस्तुरूपं देशकालाकारनियतम् । तत्कथं विपरीतप्रतिभासिना भ्रान्तेन ज्ञानेन साक्षात्क्रियते । अत एवाऽहाऽऽचार्यः–'तिमिराशुभ्रमणनौयानसङ्क्षोभाद्यनाहितविभ्रमं ज्ञानं प्रत्यक्षम् । ' एतेन कामलिनः शुक्लशङ्खे पीतप्रतिभासि ज्ञानं, भ्रमदलातादौ चक्रादिनिर्भासि, गच्छत्यां नावि स्थितस्य भ्रमद्वृक्षादिग्राहि, गाढमर्मप्रहारहतस्य प्रज्ज्वलत्स्तम्भादिप्रतिभासि[च] न प्रत्यक्षमित्युक्तं भवति । ननु यदि तज्ज्ञानं भ्रान्तम्, कथं ततो वस्तुप्राप्तिरिति चेन्न ततो वस्तुप्राप्तिः । किं तर्हि, ज्ञानान्तरादेवेति । तच्चतुर्विधमिन्द्रियज्ञानं मानसं स्वसंवेदनं योगिज्ञानं चेति । चक्षुरादीन्द्रियपञ्चकाश्रयेणोत्पन्नबाह्यरूपादिपञ्चविषयालम्बनं ज्ञानमिन्द्रियप्रत्यक्षम् । तत्र चक्षुर्विज्ञानं रूपविषयम् । घ्राणविज्ञानं गन्धविषयम् । जिह्वाविज्ञानं रसविषयम् । कायविज्ञानं स्पर्शविषयम् । श्रोत्रविज्ञानं च शब्दविषयम् । इन्द्रियप्रत्यक्षमिति व्यपदेशस्य[1] चासाधारणकारणत्वं निमित्तम् । यथा भेरीशब्दो यवाङ्कुर इति । इदं च प्रत्यक्षं यत्रैव स्वानुरूपं विकल्पं जनयति तत्रैव प्रमाणं सांव्यवहा-

१, देशा असाधारण, ख. पाठः ।

रिकप्रमाणाधिकारादिति । स्वविषयानन्तरविषयसहकारिणेन्द्रियज्ञानेन समनन्तरप्रत्ययेन जनितं मनोविज्ञानम् । स्वशब्देनेन्द्रियज्ञानमभिप्रेतम् । तस्य विषयः स्वविषयो बाह्यो घटादिः । स्वविषयस्यानन्तरः स्वविषयानन्तरः । इन्द्रियविज्ञानविषयादन्यो घटादिर्द्वितीयः क्षणः । तेन सहकारिणा सह मिलित्वेन्द्रियज्ञानेनोपादानेन[1] समनन्तरप्रत्ययसंज्ञकेन यज्जनितं तन्मानसं प्रत्यक्षम् । ततो यदुक्तं परेण गृहीतग्राहित्वमन्धबधिराद्यभावो योगिज्ञानस्यापि मानसत्वप्रसङ्गः अव्यवहारित्वं चेति निरस्तम् । तथा हि—द्वितीयक्षणग्रहणाद्गृहीतग्राहित्वनिरासः । इन्द्रियज्ञानजनितं हि मानसम् । अन्धादीनां रूपाद्यालम्बनमिन्द्रियज्ञानमेव नास्ति । कुतस्तज्जनितं मानसं भविष्यति । अतो नास्त्यन्धबधिराद्यभावदोषः । समनन्तरप्रत्ययविशेषणेन योगिज्ञानस्य मानसत्वप्रसङ्गो निरस्तः । समनन्तरप्रत्ययशब्दः स्वसन्तानवर्त्तिन्युपादाने ज्ञाने रूढ्या प्रसिद्धः । ततो भिन्नसन्तानवर्त्ति योगिज्ञानमपेक्ष्य पृथग्जनचित्तानां समनन्तरप्रत्ययव्यपदेशो नास्तीति । अव्यवहारित्वं पुनरस्य दूषणं नोपपद्यते, सूक्ष्मकालभावित्वेन पृथग्जनैर्दुर्लक्ष्यत्वात् । व्यवहाराङ्गत्वेनानभ्युपगमाच्च । आगमप्रसिद्धं मानसप्रत्यक्षं न त्वस्य निश्चायकं किञ्चिदस्ति । यथोक्तं भगवता द्वाभ्यां भिक्षवो रूपं गृह्यते चक्षुषा तदाकृष्टेन च मनसा । ननु व्यवहारानुपयुक्तमुपदर्शयितुं किं प्रयोजनम् । ईदृग्लक्षणयुक्तं यदि मानसं प्रत्यक्षं स्यात्, न कश्चिद्दोषः स्यादित्यागमस्यापि शुद्धिरनेन प्रतिपादितेति प्रयोजनम् ।

सर्वचित्तचैत्तानामात्मसंवेदनं स्वसंवेदनं चित्तं वस्तुमात्रग्राहकं ज्ञानम् । चित्ते भवाश्चैत्ताः । वस्तुनो विशेषरूपग्राहकाः सुखदुःखोपेक्षालक्षणाः । तेषां सर्वचित्तचैत्तानामात्मा संवेद्यते[2] येन स्वरूपेण तत्स्वरूपमात्मरूपसाक्षात्कारित्वात् । स्वसंवेदनं प्रत्यक्षं कल्पनापोढमभ्रान्तं चोच्यते । अत्र केचिदाहुः । न चित्तचैत्तानां स्वसंवेदनं घटते स्वात्मनिकारित्वविरोधात् । न हि सुशिक्षितोऽपि बटुः स्वस्कन्धमारोढुं शक्नोति । न हि तीक्ष्णाऽप्यसिधाराऽऽत्मानं छिनत्ति । न हि सुप्रज्ज्वलितोऽपि वह्निस्कन्ध आत्मानं दहति । तथा चित्तचैत्तमपि कथमात्मानं

१. ज्ञानोपादानेन, ख. पाठः । २. येन ज्ञानेन तत्स्वरूपसाक्षात्कारित्वात् । ख. पाठः ।

प्रत्येतु। वेद्यवेदकभावो हि कर्मकर्तृभावः। स च लोके भेदेनैव प्रसिद्धः, वृक्षसूत्रधारयोरिव। अत्रोच्यते। न कर्मकर्तृभावेन[1] वेद्यवेदकत्वं ज्ञाने वर्ण्यते। किं तर्हि व्यवस्थाप्यव्यवस्थापकभावेन। यथा प्रदीप आत्मानं [आत्मना] प्रकाशते तथा ज्ञानमपि जडपदार्थविलक्षणं स्वहेतोरेव प्रकाशस्वभावमुपजायमानं स्वसंवेदनं व्यवस्थाप्यते। यदाह अलङ्कारकारः–

‘ कल्पितः कर्मकर्त्रादिः परमार्थो न विद्यते।
आत्मानमात्मनैवात्मा निहन्तीति निरूप्यते[2] ॥ ’

न च चित्तचैत्तानां ज्ञानान्तरेण प्रकाश्यत्वं युज्यते। तथा हि – न तावत्समानकालभाविना ज्ञानान्तरेण चित्तचैत्तं प्रकाश्यत इति घटते। उपकार्योपकारकत्वाभावात्सव्येतरगोविषाणयोरिव। नापि भिन्नकालभाविना, क्षणिकत्वात्प्रकाशस्यैवाभावात्। यदाहालङ्कारकारः–

‘ परोक्षं यदि तज्ज्ञानं ज्ञानमित्येव तत्कुतः।
परोक्षस्य स्वरूपं कस्तस्य लक्षयितुं क्षमः ॥ ’

अपि च – यदि ज्ञानं स्वसंवेद्यं न स्यात्, तदा ज्ञातोऽर्थ इति व्यपदेशो[3] दुर्घटः स्यात्। नागृहीतविशेषणा बुद्धिर्विशेष्ये वर्त्तत इति न्यायात्। तथा ह्यर्थो विशेष्यः। ज्ञात इति विशेषणम्। ज्ञानेनेति? [ज्ञानेनहि] विशेषितः। ज्ञानं चेत्स्वबोधरूपेण न प्रतीतम्, तत्कथं ज्ञानेन विशेषितोऽर्थः प्रतीयताम्। न हि दण्डाग्रहणे दण्डिनो ग्रहणं युक्तिसङ्गतम्। यच्चोक्तं त्रिलोचनेन – ‘चक्षुषोऽग्रहणेऽपि यथा चाक्षुषं रूपं [इति] प्रतीयते तथा ज्ञानाबोधेऽपि ज्ञातोऽर्थ इति घटिष्यते’, तदसाधु। प्रस्तुतेऽनुपयोगात्। न हि चक्षू रूपस्य विशेषणम्। किं तर्हि? चक्षुर्विज्ञानम्। ततश्चक्षुर्विज्ञानासंवेदने कथं रूपं ज्ञायतामिति चोद्यमक्षतमेव। तस्मादन्यथा प्रकाशकत्वासिद्धेर्य्यमी प्रकाशन्ते तदा स्वहेतोरेव प्रकाशस्वभावा उत्पन्नाः सन्त इति स्वीकर्त्तव्यम्। यथोक्तं न्यायवादिना–

‘ विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते।
इयमेवात्मसंवित्तिरस्य याऽजडरूपता ॥ ’

---

१. कर्तृकर्म. ख. पाठः। २. निरुच्यते. ख. पाठः। ३. व्युप्रत्ययो क. ग. पाठः।

भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानं चेति । योगः समाधिः, चित्तैकाग्रतालक्षणः । निःशेषवस्तुतत्त्वविवेचिका प्रज्ञा योगोऽस्यास्तीति योगी । योगिनो यद्विज्ञानं तत्प्रत्यक्षं भूतार्थभावनाप्रकर्षपर्यन्तजम् । भूतार्थः–प्रमाणोपपन्नार्थः । भावना – पुनः पुनश्चेतसि समारोपः । भूतार्थभावनाप्रकर्षपर्यन्ताज्जातं यद्विज्ञानं तत्कल्पनापोढमभ्रान्तम् । भूतार्थश्चतुरार्यसत्यम् । दुःख–समुदय–मार्ग–निरोधलक्षणं पञ्चस्कन्धस्वभावं क्षणिकशून्यनिरात्मकदुःखादिरूपतया प्रतिपत्तव्यम् । यत्सत्तत्क्षणिकमित्याद्यनुमानेन प्रमाणोपपन्नत्वं वेदितव्यम् । तस्य विषयः स्वलक्षणम् । तस्य चतुर्विधस्य प्रत्यक्षस्य स्वलक्षणं विषयो बोद्धव्यः । स्वलक्षणमित्यसाधारणं वस्तुरूपं देशकालाकारनियतम् । एतेनैतदुक्तं भवति । घटादिरुदकाद्याहरणसमर्थोऽर्थो देशकालाकारनियतः पुरः प्रकाशमानोऽनित्यत्वाद्यनेकधर्मोदासीनः(?) प्रवृत्तिविषयो विजातीयसजातीयव्यावृत्तः स्वलक्षणमित्यर्थः । एतेन यदुक्तं परेण षट् पदार्थाः प्रत्यक्षेण परिच्छिद्यन्ते ते च प्रत्यक्षस्य विषया इति तन्निरस्तम् । यथाऽवयवि द्रव्यं गुणः कर्म । सामान्यं विशेषः । समवायश्चेति । एते पदार्थाः पराभिमताः । न चैषां प्रत्यक्षे ज्ञाने प्रतिभासोऽस्ति । न चाप्रतिभासमानो विषयो युज्यतऽति प्रसङ्गात् । तथा हि घटादौ परिदृश्यमाने पूर्वापरादिभागं विहाय नान्यत्किञ्चिदेकमवयविद्रव्यमुपलभामहे । यदाह न्यायपरमेश्वरः–

‘ भागा एव हि भासन्ते सन्निविष्टास्तथा तथा ।
तद्वानेव पुनः कश्चिद्विभागः सम्प्रतीयते ॥ ’

एवं गुणकर्मादीनां च दूषणं प्रत्येतव्यम् । ननु प्रमितिरूपां क्रियां फलभूतां निष्पादयज्ज्ञानं प्रमाणं प्रसिद्धम् । तत्र काऽसौ प्रमितिः, यां जनयज्ज्ञानं प्रमाणमिति चेत् । उच्यते । इह नीलादेरर्थात् ज्ञानं द्विरूपमुपपद्यते । नीलाकारं नीलबोधस्वरूपं च । तत्रा नीलाकारव्यावृत्त्या नीलाकारं ज्ञानं प्रमाणम् । अनीलबोधव्यावृत्त्या नीलबोधस्वरूपं प्रमितिः । सैव फलम् । यथोक्तमर्थसारूप्यमस्य प्रमाणम् [प्रामाण्यम्] । अर्थाधिगतिः प्रमाणफलम् । एतच्च विकल्पप्रत्ययेन भिन्नं व्यवस्थाप्यते । परमार्थवस्तुनो नास्त्येव भेदः । यथोक्तम् – तदेव प्रत्यक्षं ज्ञानं प्रमाणफलमिति । यदि पुनः साकारं ज्ञानं नेष्यते तदाऽना-

कारत्वेन सर्वत्र विषये तुल्यत्वात् विभागेन विषयव्यवस्था न स्यादिति। यत्पुनः केचिदाहुः – पूर्वं ज्ञानं प्रमाणमुत्तरं ज्ञानं प्रमाणफलमिति। तन्न युक्तम्। तथा हि प्रथमकालभावि तावज्ज्ञानं न प्रमाणं फल भूतस्य द्वितीयज्ञानस्यानुपप[अनुत्प]त्तेः। फलभूतज्ञानोत्पत्तौ च पूर्वकस्य क्षणिकत्वेन नाशात्कथं घटादिविषयज्ञानं प्रमाणं स्यात्। नापि समानकालभावि ज्ञानं फलमुचितम्। उपकार्योपकारकत्वाभावात्सव्येतरगोविषाणयोरिव।

। इति तर्कभाषायां प्रत्यक्षपरिच्छेदः।

# अनुमानपरिच्छेदः ।

—:०:—

अनुमानं द्विधा स्वार्थं परार्थं च। स्वस्मै यत्तत्स्वार्थम्। [स्वार्थ]अनुमानं ज्ञानात्मकम्। पर्वतादौ धूमादिकं दृष्ट्वा यस्य प्रतिपत्तुर्ज्ञानमुत्पद्यते स एव तेन ज्ञानेन परोक्षमर्थं प्रतिपद्यते नान्य इति स्वार्थानुमानमुच्यते। परस्मै यत्तत्परार्थम्। परार्थानुमानं वचनात्मकम्। त्रिरूपलिङ्गप्रतिपादकं वचनं परं प्रतिपादयति ज्ञापयतीति कृत्वा वचनमप्यनुमानशब्देनोच्यते उपचारात्। तत्र स्वार्थं त्रिरूपाल्लिङ्गादनुमेये परोक्षविषये ज्ञानं प्रतिपत्तुरुत्पद्यते तत्स्वार्थमनुमानम्। तच्च धर्मिविशेषसम्बन्धितया साध्याविनाभावित्वनिश्चय इत्येके। अग्न्यध्यवसाय इत्यन्ये। सम्प्रति लिङ्गस्य त्रैरूप्यमुच्यते। अनुमेये सत्त्वमेव निश्चितम्। अनुमेये पर्वतादौ धर्मिणि लिङ्गस्यास्तित्वमेव निश्चितम्। तदेकं रूपं पक्षधर्मतासंज्ञकम्। अत्र सत्त्वग्रहणेनासिद्धस्य निरासः। यथा नित्यः शब्दश्चाक्षुषत्वात्। चाक्षुषत्वं चक्षुर्विज्ञानग्राह्यत्वम्। तच्च शब्दे धर्मिणि नास्ति। एवकारेण पक्षैकदेशासिद्धस्य। यथा दिगम्बरप्रयोगः—चेतनास्तरवः स्वापात्। पत्रसङ्कोचलक्षणो हि स्वापः। स च सर्वेषु तरुषु न सिद्धः। निश्चितग्रहणेन सन्दिग्धासिद्धस्य। यथाऽग्निरत्र बाष्पादित्वेन ? [धूमत्वेन] सन्दिह्यमानाद्भूतसङ्घातात्। सत्त्वशब्दात्पश्चादेवकारेणासाधारणस्य। यथा नित्यः शब्दः श्रावणत्वात्। सपक्ष एव सत्त्वं निश्चितमिति वर्त्तते। समानः पक्षः सपक्षः। पक्षेण सह सदृशो दृष्टान्तधर्मीत्यर्थः। तस्मिन्सपक्ष एव सत्त्वं निश्चितमित्यन्वयसंज्ञकं द्वितीयरूपम्। तत्र सत्त्वग्रहणेन विरुद्धस्य निरासो यथा नित्यः शब्दः कृतकत्वात्। कृतकत्वं नित्यविपक्षेणानित्यत्त्वेन व्याप्तमिति विरुद्धमुच्यते। एवकारेण साधारणस्य। यथा नित्यः शब्दः प्रमेयत्वात्। प्रमेयत्वं विकल्पाविषयीकृतत्वम्। सपक्षे आकाशे विपक्षे च घटादौ सर्वत्रास्तीति साधारणमुच्यते। सत्त्वशब्दात्पूर्वस्मिन्नेवकारेण सर्वसपक्षाव्यापिनोऽपि प्रयत्नानन्तरीयकस्य हेतुत्वं कथितम्। यथाऽनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्घटवद्विद्युद्वत्। निश्चितग्रहणेन सन्दिग्धान्वयस्य यथाऽसर्वज्ञः कश्चिद्वक्तृत्वादिष्टपुरुषवत्। इष्टपुरुषे

सपक्षे वक्तृत्वमसर्वज्ञत्वेन व्याप्तमव्याप्तं वा नैव ज्ञायते। असपक्षे चासत्त्वमेव निश्चितम्। न सपक्षोऽसपक्षः। तत्रासत्वमेव व्यतिरेकसंज्ञकं तृतीयं रूपम्। अत्राप्यसत्त्वग्रहणेन विरुद्धस्य निरासः। एवकारेण साधारणस्य। निश्चितग्रहणेन सन्दिग्धविपक्षव्यावृत्तिकस्य। यथाऽवीतरागोऽयं पुरुषः वक्तृत्वाद्रथ्यापुरुषवत्। यत्रावीतरागत्वं नास्ति तत्र वक्तृत्वमपि, यथोपलखण्डे, यदि नाम पाषाणखण्डादुभयं व्यावृत्तं तथाऽपि न ज्ञायते किमवीतराग[त्व]निवृत्तौ वक्तृत्वनिवृत्तिः पाषाणखण्डात् स्वत एव वेति। ततः सन्दिग्धव्यतिरेकोऽयमनैकान्तिकः। एवकारेण विपक्षैकदेशवृत्तेः। यथा प्रयत्नानन्तरीयकः शब्दोऽनित्यत्वात्। अनित्यत्वं विपक्षादाकाशान्निवृत्तं न विद्युतः। ततो विपक्षैकदेशवृत्तित्वमस्य। ननु सपक्ष एव सत्त्वमित्युक्ते सामर्थ्यादेवासपक्षे चासत्त्वमेवेत्यवगम्यते। तत्किमर्थमुभयोरुपादानमिति चेत्। न। विपक्षनियमार्थमिति पूर्ववृद्धाः। ते च त्रिविध एव विपक्षो भवतीति मन्यन्ते। साध्याभावमात्रं साध्यादन्यः साध्येन सह विरुद्धश्च। प्रयोगनियमार्थमिति केचित्। त्रिरूपाणि च त्रीण्येव लिङ्गानि। त्रीणि रूपाणि येषां तानि त्रीण्येवं लिङ्गानि। अनुपलब्धिस्त्रिरूपं लिङ्गम्। स्वभावस्त्रिरूपं लिङ्गम्। कार्यं त्रिरूपं लिङ्गम्। साधनं ज्ञापकं हेतुर्व्याप्यमिति लिङ्गापरनामानि। तत्र कार्यं यथा – यत्र धूमस्तत्राग्निः, यथा महानसे। धूमश्चात्रेति। व्याप्तिपक्षधर्मतासंज्ञकं द्व्यवयवमेव साधनवाक्यं सौगतानाम्। अन्ये तु प्रतिज्ञाहेतुदृष्टान्त उपनयो निगमनं चेति पञ्चावयवं साधनवाक्यमाहुः। उपन्यासश्चेदृशः। अग्निरत्र, धूमात्, यत्र धूमस्तत्राग्निः यथा महानसे, तथा चायं, तस्मादग्निरिति। एतच्चायुक्तं प्रतिज्ञावचनमात्रात्सम्बन्धरहितात्साध्यप्रतिपत्तेरयोगात्। सम्बन्धाभावस्तु शब्दार्थयोः सम्बन्धदूषणे प्रतिपादितत्वान्न पुनरुच्यते। प्रतिज्ञामन्तरेण पञ्चम्यन्तहेतुप्रयोगोऽप्ययुक्तः। हेतुं विनोपनयदृष्टांतावप्ययुक्तौ। यत्र प्रतिज्ञैव नास्ति तत्र प्रतिज्ञायाः पुनर्वचनं निगमनं कुतो भविष्यतीति सर्वमालूनविशीर्णम्। अयं च कार्यहेतुर्विषयभेदेन त्रिविधः। अग्न्यादौ साध्ये धूमादिस्त्रिविधप्रत्यक्षानुपलम्भेन निश्चेतव्यः। चक्षुरादौ साध्ये[२] ज्ञानं कादाचित्ककार्योत्पादा-

१. स्वतोऽपि ग. पाठः। २. मध्ये. क. ग. पाठः।

न्निश्चीयते । रूपादौ साध्ये रसादिरेकसामग्र्यधीनतया निश्चीयते यथा मातुलुङ्गे रूपानुमानम् । अत्र रूपे जनयितव्ये पूर्वकं रूपमुपादानम् । रसस्तु सहकारिकारणम् । पूर्वपुञ्जादुत्तरपुञ्जस्योत्पत्तौ न्याय एषः । ननूपादानसहकारिणोरन्वयव्यतिरेकानुविधानस्य कार्यं प्रति तुल्यत्वात्को भेदः । यद्विक्रियया यन्निष्पत्तिरेकसन्ताने तत्कार्यं प्रति पूर्वकमुपादानम् । यत्सन्तानान्तरे विशेषोदयनिमित्तं तत्सहकारिकारणम् । यथा शाल्यङ्कुरे जनयितव्ये शालिबीजमुपादानम् । क्षितिसलिलादि तत्र सहकारि । तदेवं कार्यहेतुस्तदुत्पत्तिसम्बन्धाद्गमक इति स्थितम् । स्वभावः स्वसत्तामात्रभाविनि साध्यधर्मे हेतुरुच्यते । स तस्य साध्यधर्मस्य स्वभावो वेदितव्यः । यथा वृक्षव्यवहारयोग्योऽयं शिंशपाव्यवहारयोग्यत्वात् । अयमिति पुरः परिदृश्यमानः पदार्थो धर्मी । शिंशपाव्यवहारयोग्यत्वादिति हेतुः । शिंशपाव्यवहारयोग्यत्वादिति कोऽर्थः ? । शाखापत्रवर्णसंस्थानविशेषव्यवहारयोग्यत्वादित्यर्थः । वृक्षव्यवहारयोग्यत्वं साध्यम् । नन्वेकत्वे साध्यसाधनभावो न युक्तः प्रतिज्ञार्थैकदेशत्वात् । न । अभेदेऽपि कश्चित्प्रतिपत्ता शिंशपाव्यवहारं कृत्वा वृक्षव्यवहारं प्राकृतमपि व्यामोहेन किञ्चिदारोप्य पुनर्न करोति । स इदानीं स्वभावहेतुना व्यवहार्यते । तस्मादेतयोः परमार्थत एकत्वेऽपि विकल्पबुद्धौ व्यावृत्तिसमाश्रयेण समुत्पन्नायां भेदेन प्रतिभासनात् साध्यसाधनत्वं न विरुध्यत इति । अनुपलब्धि?[ब्धे]र्यथा—नास्तीह प्रदेशे घटः, उपलब्धिलक्षणप्राप्तस्यानुपलब्धेः । उपलब्धिलक्षणप्राप्तस्येति दृश्यस्येत्यर्थः । नन्वसतः कथं दृश्यता ? । एकेन्द्रियज्ञानग्राह्ये प्रदेशे उपलभ्यमाने यदि घटः स्यात् दृश्य एव भवेदिति । उपलम्भप्रत्ययान्तरसाकल्यादृश्यतया सम्भावितो न तु दृश्य एव । तत्र तस्यानुपलब्धिरिति हेतुः । स चैकज्ञानसंसर्गिपदार्थादेकज्ञानसंसर्गिपदार्थोपलम्भाच्च निश्चीयत इति तदुभयं कर्मकर्तृभावेन पर्युदासवृत्त्याऽनुपलब्धिरुच्यते । ननु?[तु] प्रसज्यवृत्त्योपलब्धिनिवृत्तिमात्रम् । तद्धि स्वयमेव न किञ्चिदिति कथं साधनं स्यात् । नापि प्रतिषेध्यादन्यस्य ज्ञानमात्रं रूपोपलम्भादपि नारङ्गरसनिषेधप्रसङ्गात् । तस्मान्निषेध्यादन्यद्विशिष्टमेव वस्तुद्वयं प्रदेशः । प्रदेशज्ञानं वाऽनुपलब्धिरिति स्थितम् । अत एवाभावो न साध्यते । तस्य घटविविक्तप्रदेशग्राहिणा प्र-

त्यक्षेणैव सिद्धत्वात् । अभावव्यवहारस्तु मूढं प्रत्यनुपलम्भेन साध्यते । तथा हि – कश्चिन्मूढो रजःप्रभृतिषु साङ्ख्यप्रसिद्धेषु गुणेष्वनुपलम्भेन प्रवर्तिताभावव्यवहारोऽपि पुनः सर्वत्र सर्वमस्तीति स्वसिद्धान्ताभ्यासात्क्वाऽपि प्रदेशादौ घटानुपलम्भे सत्यपि नाभावव्यवहारं करोतीत्यनुपलम्भेन त्रिविधव्यवहारः कार्यते । तत्र निःशङ्कगमनागमनादिलक्षणः कायिको व्यवहारः । घटोऽत्र नास्तीति वाचिकः । ईदृश एवान्तर्जल्पाकारो मानसिकश्चेति । अनुपलम्भस्य कर्मधर्मपक्षे साध्येन सह तादात्म्यलक्षण एव सम्बन्धो बोद्धव्यः । कर्तृधर्मपक्षे तु तदुत्पत्तिः । तथा हि घटविविक्तः प्रदेशः प्रदेशज्ञानं वाऽनुपलब्धिरित्युक्तम् । असद्व्यवहारयोग्यत्वं तु तस्यैव स्वभावः । ज्ञानं तु प्रदेशस्य कार्यमिति । ननु यद्यनुपलब्धेरपि तादात्म्यतदुत्पत्ती एव सम्बन्धौ कथं तर्हि कार्यस्वभावाभ्यामनुपलब्धेर्भेदः ? । प्रतिषेधसाधनाद्भेदो न वस्तुतः । यथोक्तम् – 'अत्र द्वौ वस्तुसाधिनौ, एकः प्रतिषेधहेतु'रिति । उपलब्धिलक्षणप्राप्त[त्व]विशेषणेन देशविप्रकृष्टे सुमेर्वादौ कालविप्रकृष्टे भविष्यच्छङ्खचक्रवर्त्यादौ स्वभावविप्रकृष्टे पिशाचादावनुपलम्भमात्रसद्भावेऽपि नाभावव्यवहार इत्युक्तं भवति । इयं चानुपलब्धिर्वर्त्तमानकाले प्रमाणम्, विशिष्टस्मरणसद्भावेऽतीतकाले च । अनागतकाले त्वनुपलब्धिः स्वयमेव सन्दिग्धरूपा । ततो न प्रमाणम् । यदाह न्यायवादी – 'अमूढस्मृतिसंस्कारस्यातीतस्य वर्त्तमानस्य च प्रतिपत्तृप्रत्यक्षस्य निवृत्तिरनुपलब्धिरभावव्यवहारसाधिनी'ति । तत्र यदा दूरत्वान्निषेध्यस्यायोग्यदेशत्वं स्यात्, तदा दृश्यानुपलब्धिः साक्षात्प्रयोक्तुं न शक्यत इति कार्यानुपलब्ध्यादयः प्रयुज्यन्ते । अत एवेयं प्रमाणभेदेन षोडशधा भवति । तत्र स्वभावानुपलब्धिर्यथा – नास्त्यत्र धूमः, उपलब्धिलक्षणप्राप्तस्यानुपलब्धेः । प्रतिषेध्यस्य धूमस्य यः स्वभावस्तस्येहानुपलब्धिः ॥ १ ॥ कार्यानुपलब्धिर्यथा–नेहाप्रतिबद्धसामर्थ्यानि धूमकारणानि सन्ति, धूमाभावात् । प्रतिषेध्यानां हि धूमकारणानां कार्यं धूमः, तस्येहानुपलब्धिः ॥ २ ॥ कारणानुपलब्धिर्यथा – नात्र धूमो दहनाभावात् । प्रतिषेध्यस्य धूमस्य कारणं दहनः, तस्येहानुपलब्धिः ॥ ३ ॥ व्यापकानुपलब्धिर्यथा–नात्र शिंशपा वृक्षाभावात् ।

प्रतिषेध्यायाः शिंशपाया व्यापको वृक्षः, तस्येहानुपलब्धिः ॥ ४ ॥ स्वभावविरुद्धोपलब्धिर्यथा – नात्र शीतस्पर्शो वह्नेरिति। प्रतिषेध्यस्य शीतस्पर्शस्य यः स्वभावस्तस्य विरुद्धो वह्निस्तस्य चेहोपलब्धिः ॥ ५ ॥ कार्यविरुद्धोपलब्धिर्यथा – नेहाप्रतिबद्धसामर्थ्यानि शीतकारणानि सन्ति वह्नेरिति। अन्त्यदशाप्राप्तमेव(?) कारणं कार्यं जनयति न सर्वम्, ततो विशेषणोपादानम्। प्रतिषेध्यानां शीतकारणानां कार्यं शीतम्, तस्य विरुद्धो वह्निः, तस्येहोपलब्धिः ॥ ६ ॥ कारणविरुद्धोपलब्धिर्यथा – नास्य रोमहर्षादिविशेषाः सन्ति सन्निहितदहनविशेषत्वात्। प्रतिषेध्यानां रोमहर्षादिविशेषाणां कारणं शीतम्, तस्य विरुद्धो दहनविशेषः, तस्य चेहोपलब्धिः ॥ ७ ॥ व्यापकविरुद्धोपलब्धिर्यथा – नात्र तुषारस्पर्शो दहनात्। प्रतिषेध्यस्य तुषारस्पर्शस्य व्यापकं शीतम्, तस्येह विरुद्धो दहनविशेषः, तस्योपलब्धिः ॥ ८ ॥ स्वभावविरुद्धकार्योपलब्धिर्यथा – नात्र तुषारस्पर्शो धूमात्। प्रतिषेध्यस्य तुषारस्पर्शस्य यः स्वभावस्तस्य विरुद्धो वह्निः, तस्य कार्यं धूमः, तस्य चेहोपलब्धिः ॥ ९ ॥ कार्यविरुद्धकार्योपलब्धिर्यथा – नेहाप्रतिबद्धसामर्थ्यानि शीतकारणानि सन्ति धूमादिति। प्रतिषेध्यानां शीतकारणानां कार्यं शीतम्, तस्य विरुद्धो वह्निः, तस्य कार्यं धूमः, तस्येहोपलब्धिः ॥ १० ॥ कारणविरुद्धकार्योपलब्धिर्यथा – न रोमहर्षादियुक्तपुरुषवानयं प्रदेशो धूमात्। प्रतिषेध्यानां हि रोमहर्षादिविशेषाणां कारणं शीतम्, तस्य विरुद्धो वह्निः, तस्य कार्यं धूमस्तस्येहोपलब्धिः ॥ ११ ॥ व्यापकविरुद्धकार्योपलब्धिर्यथा – नात्र तुषारस्पर्शो धूमात्, प्रतिषेध्यस्य तुषारस्पर्शस्य व्यापकं शीतम्, तस्य विरुद्धोऽग्निः, तस्य कार्यं धूमः, तस्येहोपलब्धिः ॥ १२ ॥ स्वभावविरुद्धव्याप्तोपलब्धिर्यथा – नात्राग्निस्तुषारस्पर्शात्। प्रतिषेध्यस्य हि वह्नेर्यः स्वभावस्तस्य विरुद्धं शीतम्, तेन व्याप्तस्तुषारस्पर्शः, तस्य चेहोपलब्धिः ॥ १३ ॥ कार्यविरुद्धव्याप्तोपलब्धिर्यथा – नेहाप्रतिबद्धानि वह्निकारणानि सन्ति तुषारस्पर्शादिति। प्रतिषेध्यानां वह्निकारणानां कार्यं वह्निः, तस्य विरुद्धं शीतम्, तेन व्याप्तस्तुषारस्पर्शः, तस्येहोपलब्धिः ॥ १४ ॥ कारणविरुद्धव्याप्तोपलब्धिर्यथा – नात्र धूमस्तुषारस्पर्शात्। प्रतिषेध्यस्य धूमस्य कारणं वह्निः, तस्य विरुद्धं शीतम्। तेन व्याप्तस्तुषारस्पर्शः,

३ त.

तस्येहोपलब्धिः ॥ १५ ॥ व्यापकविरुद्धव्याप्तोपलब्धिर्यथा – नायं नित्यः कादाचित्ककार्यकारित्वात् । प्रतिषेध्यस्य हि नित्यत्वस्य निरतिशयत्वं व्यापकम्, तस्य विरुद्धं सातिशयत्वम्, तेन व्याप्तं कादाचित्ककार्यकारित्वम्, तस्य चेहोपलब्धिः ॥ १६ ॥ एते च कार्यानुपलब्ध्यादयः पञ्चदश प्रयोगाः स्वभावानुपलब्धिस्वभावा एव बोद्धव्याः । प्रयुक्तिभेदेन परं भेदः । अत्र स्वभावानुपलब्धेरसद्व्यवहारयोग्यत्वं साध्यम् । न त्वभावः । अभावो हि पर्युदासवृत्त्याऽनुपलम्भ इत्युक्तम् । तस्य च प्रत्यक्षेणैव सिद्धत्वात् । अपरैश्च सर्वैरभावोऽभावव्यवहारश्च । तेषां परोक्षविषयत्वात् ।

॥ इति तर्कभाषायां स्वार्थानुमानपरिच्छेदो द्वितीयः समाप्तः ॥

# परार्थानुमानपरिच्छेदः ।

——:o:——

त्रिरूपलिङ्गाख्यानं परार्थमनुमानम् । अन्वयव्यतिरेकपक्षधर्मतासंज्ञकानि त्रीणि रूपाणि येन वचनेन ख्याप्यन्ते तद्वचनमुपचारादनुमानशब्देनोच्यते । तद्द्विविधम् – साधर्म्यवद्वैधर्म्यवच्च । साध्यधर्मिदृष्टान्तधर्मिणोर्हेतुसत्ताकृतं सादृश्यं साधर्म्यम् । तद्यस्यास्ति तत्साधर्म्यवत् साधनवाक्यम् । साध्यधर्मिदृष्टान्तधर्मिणोर्हेत्वसत्ताकृतं[1] वैसादृश्यं वैधर्म्यम् – तद्यस्यास्ति तद्वैधर्म्यवत्साधनवाक्यम् । तत्र स्वभावहेतोः साधर्म्यवन्तं प्रयोगं प्रदर्शयितुं सौत्रान्तिकमतमाश्रित्य भगवता यदुक्तं संस्कृतं सर्वं क्षणिकमिति तद्व्युत्पाद्यते । समेत्य – सम्भूय हेतुभिः– प्रत्ययैः कृतं वस्तुजातं संस्कृतम् । क्षणिकमिति । उत्पत्तिक्षण एव सत्त्वात् । सर्वं तावद्घटादिकं वस्तु मुद्गरादिसन्निधौ नाशं गच्छद्दृश्यते, तत्र येन स्वरूपेणान्त्यावस्थायां घटादिकं विनश्यति तच्चेत्स्वरूपमुत्पन्नमात्रस्य विद्यते, तदानीमुत्पादानन्तरमेव तेन विनष्टव्यमिति व्यक्तमस्य क्षणिकत्वम् । अथेदृश एव स्वभावस्तस्य स्वहेतोर्जातो यत्कियन्तं कालं स्थित्वा विनश्यति, एवं तर्हि मुद्गरादिसन्निधानेऽप्येष एव तस्य स्वभाव इति पुनरप्यनेन तावन्तमेव कालं स्थातव्यमिति नैव विनश्येदिति । तस्मात्तत्क्षणद्वयस्थायित्वेनाप्युत्पत्तौ प्रथमक्षणवद्द्वितीयेऽपि क्षणे क्षणद्वयस्थायित्वात्पुनरपरक्षणद्वयमवतिष्ठेत । एवं तृतीयेऽपि क्षणे तत्स्वभावत्वान्नैव विनश्येदिति । स्यादेतत् – स्थावरमेव तद्वस्तु स्वहेतोर्जातम्, परं [प्र]बलेन विरोधकेन मुद्गरादिना विनाश्यत इति । तदसत् । कथं पुनरेतद्योक्ष्यते । न च तद्विनश्यति स्थावरत्वात् । विनाशश्च तस्य विरोधिना [प्र]बलेन क्रियत इति न ह्येतत्सम्भवति । जीवति च देवदत्तो मरणं चास्य भवतीति । अथ विनश्यति तर्हि कथमविनश्वरं तद्वस्तु स्वहेतोर्जातमिति । न हि म्रियते चामरणधर्मा चेति युज्यते वक्तुम् । तस्मादनश्वरत्वे कदाचिदपि नाशायोगात् दृष्टत्वाच्च नाशस्य नश्वरमेव तद्वस्तु स्वहेतोरुपजातमङ्गीकर्त्तव्यम् । तस्मादुत्पन्नमात्रमेव विनश्यति । तथा च क्षणक्षयित्वं सिद्धं भवति । प्रयोगः पुनरयं कर्त्तव्यः – यद्विनश्वरस्वरूपं तदनन्तरानवस्थायि यथाऽन्त्यक्षण-

---

१. कृतं वैधर्म्यं—क. ग. पाठः । २. तद्वै क. पाठः ।

वर्त्ति घटस्य रूपम्, विनश्वरस्वरूपं च रूपादिकमुदयकाल इति स्वभावहेतुः। यदि क्षणक्षयिणो भावाः कथं तर्हि स एवायमिति प्रत्यभिज्ञा स्यात्। निरन्तरसदृशापरापरोत्पादादविद्यानुबन्धाच्च। पूर्वक्षणविनाशकाल एव तत्सदृशं क्षणान्तरमुदयते, तेनाकारविलक्षणत्वाभावादभावेनाऽव्यवधानाच्चात्यन्तोच्छेदेऽपि स एवायमित्यभेदाध्यवसायी प्रत्ययः प्रस्तूयते। अत्यन्तभिन्नेष्वपि लूनपुनरुत्पन्नकुशकेशादिषु दृष्ट एवायं स एवायमिति प्रत्ययः। तथेहापि किं न सम्भाव्यते। तस्मात्सर्वं संस्कृतं क्षणिकमिति सिद्धमेवैतत्। निर्विशेषणस्य स्वभावहेतोरयं प्रयोग इति। तथाऽपरोऽपि निर्विशेषणप्रयोगः—यत्सत् तत्सर्वमनित्यं यथा घटः। सन्तश्चामी प्रमाणप्रतीताः पदार्थाः। तथाऽपरोऽपि वेदवाक्यस्य पौरुषेयत्वसाधनाय स्वभावहेतुः। यथा यद्वाक्यं तत्पौरुषेयम्। यथा रथ्यापुरुषवाक्यम्। वाक्यं चेदमग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादि। सविशेषणप्रयोगो यथा—यदुत्पत्तिमत्तत्सर्वमनित्यं यथा घटः। उत्पत्तिमांश्च शब्दः। अनुत्पन्नेभ्यो व्यावृत्तो भाव उत्पन्न उच्यते। यदा सैव व्यावृत्तिर्व्यावृत्त्यन्तरव्यवच्छेदेन व्यतिरिक्तोच्यते भावस्योत्पत्तिरिति तदा कल्पितभेदेन स्वभावभूतधर्मेण विशिष्टः स्वभावो हेतुः। नन्वसत्त्वव्यावृत्त्या सन्नुच्यते। व्यावृत्त्यन्तरव्यवच्छेदेन च व्यतिरिक्तमिव सत्त्वमुच्यते। अतस्तदपि स्वभावभूतधर्मभेदेन स्वभावोदाहरणं प्राप्तम्। नैतदस्ति। सत एव धर्मित्वान्न सत्त्वेन कस्यचिद्विशेषणम्। अनुत्पन्नव्यवच्छेदेन पुनरुत्पत्तिः सतो विशेषणम्। भिन्नविशेषणस्य प्रयोगो यथा—यत्कृतकं तदनित्यं यथा घटः। कृतकश्च शब्दः। ननु चित्रगुरिति भिन्नविशेषणस्य प्रयोगः। यथा चात्र चित्रगोशब्दो भिन्नविशेषणवाचकोऽस्ति। न तथा कृतकशब्दे भिन्नविशेषणवाचकं किमप्यस्ति। तत्कथं भिन्नविशेषणस्योदाहरणम्। अपेक्षितपरव्यापारः स्वभावनिष्पत्तौ[1] भावः कृतक इत्युच्यते। ततः कृतकशब्दः परव्यापारसापेक्षं स्वभावं प्रकृत्यैव वदन् भिन्नविशेषणमेवाह। प्रयुक्तविशेषणस्य स्वभावस्य प्रयोगः। यः प्रत्ययभेदभेदी स कृतकः। यथा धूमः प्रत्ययं कारणं तस्य भेदस्तेन भेत्तुं शीलं यस्य स

१. कृतकव्यापारसापर स्वभावेव क. ग. पाठः।

प्रत्ययभेदभेदी। [1] कारणमहत्त्वेन महत्त्वं कारणाल्पत्त्वेनाल्पत्वं यस्येत्यर्थः। प्रत्ययभेदशब्दस्य भिन्नविशेषणवाचकस्यात्र प्रयुक्तत्वात् प्रयुक्तविशेषणोऽयम्। स्वभावहेतुप्रदर्शनं च व्यामोहनिवृत्तये। धर्मभेदकल्पनयाऽपि स्वभावहेतुरेव प्रसज्यत इति प्रतिपादितम्। स्वभावहेतोर्वैधर्म्यवान् प्रयोगो यथा – यद्यदऽनन्तरानवस्थायि न भवति न तत्तदा विनश्वरस्वरूपं यथाऽऽकाशम्। विनश्वरस्वरूपं च रूपादिकमुदयकाले। व्यतिरेकप्रयोगे साधनाभावेन साध्याभावो व्याप्तत्वात्साधनाभावे नियतो भवतीति बोद्धव्यम्। तथाऽपरोऽपि वैधर्म्यप्रयोगः। यत्र क्षणिकत्वं नास्ति तत्र सत्त्वमपि यथा गगनारविन्दे संश्च शब्दः। तथा यत्रानित्यत्वं निवृत्तं तत्रोत्पत्तिमत्त्वमपि यथा कूर्मरोम्णि। उत्पत्तिमांश्च शब्दः। यत्रानित्यत्वं निवृत्तं तत्र कृतकत्वमपि, यथा शशशृङ्गे। कृतकश्च शब्दः। यत्र कृतकत्वं नास्ति तत्र प्रत्ययभेदभेदित्वमपि यथा गगने। प्रत्ययभेदभेदी च शब्द इति। कार्यहेतोः साधर्म्यवान्प्रयोगो यथा – यत्र यत्र धूमस्तत्र तत्राग्निर्यथा महानसे धूमश्चात्र। कार्यहेतुरपि प्रत्यक्षानुपलम्भाभ्यां सिद्ध एव कार्यकारणभावे सति, कारणे साध्ये प्रयोक्तव्यः। वैधर्म्यप्रयोगो यथा – असत्यग्नौ न भवत्येव धूमो यथा महाह्रदे। अस्ति चेह धूम इति। अनुपलब्धेः साधर्म्यवान्प्रयोगो यथा – अवयविनिराकरणाय यद्यत्रोपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते तत्तत्रासद्व्यवहारयोग्यम्, यथा नरशिरसि शृङ्गम्। नोपलभ्यते चात्रोपलब्धिलक्षणप्राप्तः पराभिमतोऽवयवी कपालेषु। वैधर्म्यवान् यथा – यत्सदुपलब्धिलक्षणप्राप्तं तदुपलभ्यत एव। यथा नीलादिविशेषः। न चैवमिह प्रदेशविशेषे उपलब्धिलक्षणप्राप्तस्योपलब्धिर्घटस्येति। सर्वत्र साधर्म्यवति साधनवाक्ये साध्येन साधनं व्याप्तम्। वैधर्म्यवति पुनः साधनवाक्ये साधनाभावेन साध्याभावो व्याप्त इति प्रतिपत्तव्यम्। साधनस्य च साध्ये नियतत्वकथनं साध्याभावस्य च साधनाभावे नियतत्वकथनं नाम व्याप्तिरभिधीयते। ततः प्रमाणेन व्याप्तिसिद्धौ सत्यां नेदं क्वापि शङ्कनीयम् साधनं च स्यात् साध्यं च तत्र धर्मिणि न भवतीति। यत्र प्रमाणेन सर्वोपसंहारवती व्याप्तिरेव न सिद्धा तत्र शङ्काप्रसरोऽनिवार्यः। यथेश्वर-

---

१. [ शब्दः। प्रत्ययः कारणं तस्यभेदेन भेत्तुं शीलं यस्य स प्रत्ययभेदभेदी ] क. ग. पाठः।

सिद्धौ कार्यत्वानुमाने। तथा हि तेषां साधनोपन्यासः। इहान्यः सर्वज्ञो भवतु मा वाभूत्। भगवान्पुनरीश्वरः शक्यते सर्वज्ञः साधयितुम्। तथा हि त्रयः खलु भावा भवन्ति। केचिन्निश्चितकर्तृका यथा घटादयः। केचिन्निश्चितकर्तृनिवृत्तयो यथा व्योमादयः। अन्ये पुनः सन्दिग्धकर्तृका यथा क्षित्यादयः। न पुनरेतेभ्योऽन्यः प्रकारोऽस्ति। तत्र ये दृश्यमानोत्पत्तयो वनस्पत्यादयो ये च चिरोत्पन्नविश्वम्भरादयः ते सर्वे सन्दिग्धकर्तृत्वेन व्यवतिष्ठमाना बुद्धिमत्कर्तृकाः कार्यत्वात्कुम्भादिवत्। नायमसिद्धो हेतुः। कार्यत्वस्य सर्वेषां प्रमाणसिद्धत्वात्। नापि विरुद्धः सपक्षे भावात्। न च नैकान्तिकः। साध्यविपर्यये बाधकप्रमाणसद्भावात्। तथा हि कार्यं तावद्बुद्धिमतः कुम्भकारादुपजायमानं भूयोदर्शनसहायेन मानसेन प्रत्यक्षेणोपलब्धम्। तद्यदि बुद्धिमन्तरेणापि स्यात् तदानीं बुद्धिमतः सकाशात्कदाचिदपि नोपजायेत। अकारणात्कार्यस्य सकृदप्युत्पादायोगात्। तस्मान्नेदं क्वापि शङ्कनीयं कार्यं च स्यान्न बुद्धिमद्धेतुकमिति। अत्रेदमभिधीयते। साधनं खलु सर्वत्र साध्यसाधनयोः सर्वोपसंहारेण प्रमाणेन व्याप्तौ सिद्धायां साध्यं गमयेदिति सर्ववादिसम्मतम्। तत्र यदि दृश्यशरीरविशिष्टेन बुद्धिमता व्याप्तिर्गृह्यते तदा तथाभूतसाध्यमन्तरेणापि जायमाने तृणादौ कार्यत्वस्य दर्शनात्प्रमेयत्वादिवत्साधारणानैकान्तिकोऽयं हेतुः। तृणादयः पक्षीकृता इत्यपि न वक्तव्यम्। न हि व्यभिचारविषय एव पक्षो भवितुमर्हति। 'सन्दिग्धे हेतुवचनात् व्यस्तो हेतोरनाश्रय' इति न्यायात्। अथाशक्यारोहणेऽपि पर्वते दहनमन्तरेण धूमदर्शनादेवं धूमेऽपि व्यभिचारो वक्तुं सुलभ एव। तन्न। अशक्यारोहणत्वेन पर्वते दहनस्य द्रष्टुमशक्यत्वात् युक्तं तत्र सन्दिग्धविषयत्वम्। प्रस्तुते तु दृश्यशरीरविशिष्टेन बुद्धिमता व्याप्तौ गृह्यमाणायां दृश्यानुपलम्भेन बुद्धिमतो बाधो भवतीत्युक्तम्। अथादृश्यशरीरेण बुद्धिमन्मात्रेण वा व्याप्तिरवगम्यते तदाऽदृश्यस्य बुद्धिमन्मात्रस्य वा साध्यस्य दृश्यानुपलम्भेन व्यतिरेकासिद्धेः सन्दिग्धविपक्षव्यावृत्तिकोऽयं हेतुः। साध्याभावप्रयुक्तस्य साधनाभावस्यासिद्धत्वेन व्याप्तेरभावात्। तथा चोक्तम्—

‘ कार्यत्वस्य विपक्षवृत्तिहतये सम्भाव्यतेऽतीन्द्रियः ।
कर्त्ता चेद्व्यतिरेकसिद्धिविधुरा व्याप्तिः कथं सिध्यति ।
दृश्योऽथ व्यतिरेकसिद्धिमनसा कर्त्ता समाश्रीयते
तत्त्यागेऽपि तदा तृणादिकमिति व्यक्तं विपक्षेक्षणम् ॥ ’

यच्च त्रिलोचनेनोक्तम् – स्वाभाविकः सम्बन्धो धूमादीनां वह्न्यादिभिः सह । तदुपाधेरनुपलभ्यमानत्वात् क्वचिद्व्यभिचारस्यादर्शनादिति । तन्न युक्तम् । यतोऽर्थान्तरं किञ्चिदपेक्षणीयमुपाधिशब्देनाभिधीयते । न चार्थान्तरमवश्यं दृश्यं स्यात् । अदृश्यमपि देशकालस्वभावविप्रकृष्टं सम्भाव्यते । अतो धूमस्यापि दहनेन सह सम्बन्धे भविष्यत्युपाधिः । न चोपलभ्यत इति कथमदर्शनमात्रेण ना(स्त्ये?स्ती)वोच्यते । यदप्युक्तं व्यभिचारस्यादर्शनादिति साधनं तदपि सन्दिग्धासिद्धम् । प्रत्ययान्तरवैकल्येनाहत्य व्यभिचारस्यादर्शनेऽपि सर्वत्र निषेद्धुमशक्यत्वात् । न चैतावता प्रामाणिकलोकयात्रातिक्रमः । प्रामाणिकैरेव साधकबाधकप्रमाणाभावे संशयस्य विहितत्वात् । न चैवं संशये सर्वत्राप्रवृत्तिप्रसङ्गः । प्रमाणादर्थसंशयाच्च प्रवृत्तेरुपपत्तेः । यदप्युक्तम् – यथाऽन्यत्वाविशेषेऽपि बौद्धानां किञ्चिदेव वस्तु कार्यं स्यात् किञ्चिदेव कारणं न सर्वं तथा ममाप्यन्यत्वाविशेषेऽपि किञ्चिदेव धूमादिकं वस्तु स्वाभाविकसम्बन्धेन सम्बद्धं न सर्वमिति । तन्न युक्तम् । यथा धूमाख्यं वस्तु दहनायत्तमिति प्रमाणसिद्धं तथा किं स्वाभाविकसम्बन्धोऽपि प्रमाणसिद्धः, येनैवमुच्यते । किञ्च स्वाभाविकः सम्बन्ध इति कोऽर्थः ? । किं स्वतो भूतः स्वहेतोर्वा भूतोऽहेतुको वा इति त्रयो विकल्पाः । तत्र न तावदाद्यः पक्षः स्वात्मनिकारित्वविरोधात् । नापि द्वितीयस्तदुत्पत्तिसम्बन्धस्वीकारप्रसङ्गात् । अथाहेतुकः, तदा देशकालस्वभावनियमाभावादतीवासङ्गतः स्वाभाविकसम्बन्धवादः । किञ्च – साधर्म्येण वा वैधर्म्येण वा दृष्टान्तमात्रमप्यस्तीति (न)व्याप्तेर(पि)सिद्धिः । यदृच्छामिलितयोरपि करभगर्दभयोस्तथाभावप्रसङ्गात् । तस्मान्निदर्शनं नाम गृहीतविस्मृतप्रतिबन्धग्राहकप्रमाणस्मरणद्वारेण हेतावुपयुज्यते । न स्वसन्निधिमात्रेण । तथा हि न तावदाकाशे साध्याभावेन साधनाभावः

१. तद् क. ग. पाठः ।

प्रतीयते। आकाशे हि यथा बुद्धिमत्कारणनिवृत्तिस्तथाऽचेतनस्यापि कारणस्य निवृत्तिरस्त्येव। तत्कस्याभावप्रयुक्तः कार्यभावः प्रतीयताम्, येन साध्याभावप्रयुक्तः साधनाभावो व्यतिरेकः सिध्यति। नापि घटे कार्यत्वस्य बुद्धिमदन्वयदर्शनादाकाशेऽपि बुद्धिमत्कारणनिवृत्तिः।[1] तथाऽचेतनस्यापि कारणस्य निवृत्तिरस्त्येव। तदभावादेव कार्यत्वाभावो वक्तुं युज्यते। यस्मादनयोस्तादात्म्यं तदुत्पत्तिरन्यो वा स्वाभाविकादिसम्बन्धः प्रमाणतो न प्रसाधित इत्युक्तम्। किञ्चादर्शनमात्रेण व्यतिरेको न सिध्यति। तथा हि विपक्षे हेतुर्नोपलभ्यत इत्यनेनोपलम्भकप्रमाणनिवृत्तिरुच्यते। प्रमाणं च प्रमेयस्य कार्यम्, नाकारणं विषय इति न्यायात्। न च कार्यनिवृत्तौ कारणनिवृत्तिरुपलब्धा। निर्धूमस्यापि वह्नेर्दर्शनात्। यदि पुनः प्रमाणसत्तया प्रमेयसत्ता व्याप्ता स्यात्, तदा युक्तमेतत्केवलम्। इयमेव व्याप्तिरसम्भाविनी, सर्वस्य सर्वदर्शित्वप्रसङ्गात्। तन्नादर्शनमात्रेण व्यतिरेकः सिध्यति। यथोक्तम्—

'सर्वादृष्टिश्च सन्दिग्धा स्वादृष्टिर्व्यभिचारिणी।
खलविलान्तर्गतस्य बीजस्यासत्त्वदर्शनात्॥'

यदपि वाचस्पतिराह—'विशेषस्मृत्यपेक्ष एव संशयो भवति। ततो यथादर्शनमेवाशङ्कितव्यम्' अत्रोच्यते। नायं न्यायः सार्वत्रिकः। तथाऽप्यभ्युपगम्यापि ब्रूमः। तथा हि—तादात्म्यतदुत्पत्तिसम्बन्धत्यागेन साधारणधर्मेण प्रमेयत्वधूमत्वकार्यत्वानां तन्मतेन सजातीयत्वम्। तत्र प्रमेयत्वस्य व्यभिचारदर्शनमेव शङ्कामुपस्थापयतीति यथादर्शनमेवेदमाशङ्कितम्। अतः सन्दिग्धविपक्षव्यावृत्तिकत्वं[2] हेतुदूषणं दुर्वारमेत्र। एतच्च सद्दूषणमेव। अतो यदनेनोक्तं 'नायं हेतुदोषोऽतो न परिहर्त्तव्योऽस्य चोपन्यासोऽसद्दोषोद्भावनं नाम निग्रहस्थान'मिति। तदिदानीं स्वमतेनैवानेन वादिना निरनुयोज्यानुयोगलक्षणेनाऽऽत्मा बाधित इत्युपेक्षणीयोऽयं देवानां प्रियः। किञ्च—यदि बुद्धिमन्मात्रपूर्वकत्वमनेन साध्यते तदा सिद्धसाधनतादूषणं साधनस्य। अथैको नित्यः सर्वज्ञ इत्यादिविशेषणविशिष्टं बुद्धिमत्पूर्वकत्वं साध्यते तदैवं विशेषणवि-

१. कारणनिवृत्तिरित्यारभ्य तदित्यन्तः क. ग. पुस्तकयोर्नास्ति। २. व्यावृत्तिकत्वं नाम. ख. पाठः।

शिष्टेन साध्येन सह साधनस्य कार्यत्वस्य दृष्टान्तधर्मिणि प्रमाणेन [१]व्याप्तेरसिद्धेरनैकान्तिकत्वम्। अथ सामान्येन व्याप्तिमादाय विशेषस्य पक्षधर्मत्वबलात्सिद्धिरुच्यते। तन्न युक्तम्। येन साध्यगतेन विशेषणेन विना हेतोर्वृत्तिर्धर्मिणि न घटते तस्य विशेषस्य पक्षधर्मबलायुक्ता सिद्धिः। यथा धूमात्पर्वतैकदेशवर्त्तित्वस्य दहनधर्मस्य न तु तार्णत्वादीनां विशेषाणाम्। तार्णत्वमन्तरेणापि पार्णत्वे धूमस्य सम्भवात्। तद्वद्बुद्धिमतोऽपि शरीरादिवर्त्तित्वं यदि सिध्यति सिध्यतु। न पुनरत्यन्तविलक्षणं सर्वज्ञत्वम्। असर्वज्ञत्वेऽपि कार्यत्वस्य सम्भवात्। उपादानाद्यभिज्ञत्वादपि न सर्वज्ञत्वसिद्धिः। एकत्वसिद्धौ हि सिध्यत्येतत्। न चैकत्वं सिद्धम्। अनेककर्तृपूर्वकत्वेऽपि कार्यत्वस्य सम्भवात्। यथाऽनेककीटिकाशतनिष्पादितः शक्रमूर्द्धा। अथ शक्रमूर्द्धोऽपीश्वरपूर्वकत्वं साध्यम्। तर्हि घटस्यापीश्वरपूर्वकत्वसिद्धौ कुतो दृष्टान्तत्वम्?। अथ कुम्भकारस्य कर्तृत्वं दृष्टम्। कथमपाक्रियते कीटानां च हेतुत्वम्?। दृष्टं तदपि कथं वार्यते। नापि बहूनां करणे विमतिसम्भावना दृष्टत्वादेवेति। किञ्च नित्यैकसर्वज्ञे बुद्धिमति साध्ये विरुद्धोऽप्येषः। अनित्यानेकासर्वज्ञेन बुद्धिमता कार्यत्वस्य व्याप्तत्वात्। तथा हि साध्यविपर्ययसाधनादिह विरुद्ध उच्यते। अयं च साध्यविपरीतं साधयतीति। तस्मात्साध्यसाधनयोर्व्याप्तिर्दृष्टान्तधर्मिणि प्रमाणेनावश्यं दर्शयितव्येति स्थितम्।

ननु साधर्म्यवति साधनवाक्येऽन्वय एवोक्तो न व्यतिरेकः। वैधर्म्यवति च व्यतिरेक एवोक्तो नान्वयः। तत्कथमाभ्यां त्रिरूपं लिङ्गं कथ्यत इति चेन्नैष दोषः। यस्मात्साधर्म्यवति वाक्ये उपन्यस्ते सामर्थ्यादेव व्यतिरेकोऽवगम्यते। व्यतिरेकागृहीतौ च साध्याभावेऽपि न साधनाभाव इति विपर्ययः सम्भावयितव्यः। एवं चान्वयस्यैवाभावः स्यात्। सत्यपि साधने साध्याभावादिति सामर्थ्यम्। तथा वैधर्म्यवति साधनवाक्ये उपन्यस्ते सामर्थ्यादेवान्वयोऽवगम्यते। अन्वयागृहीतौ च साधनं च स्यात्, साध्यं च न भवेदिति विपर्ययः सम्भावयितव्यः। एवं च व्यतिरेक एव न भवेत्। साध्याभावेऽपि

---

१. व्यतिरेकासिद्धेः घ. पाठः।

साधनस्य सत्त्वादिति सामर्थ्यम् । तस्माद्द्वावपि प्रयोगौ त्रिरूपलिङ्गप्रकाशकावित्यदोषः ।

सम्प्रति साध्यसाधनयोर्व्याप्तिर्यत्र ग्रहीतव्या येन च प्रमाणेन, तदुभयं सुखावबोधार्थं कथ्यते । स्वभावहेतोः सत्त्वलक्षणस्य क्षणिकत्वेन व्याप्तिः साध्यधर्मिण्येव ग्रहीतव्येति केचित् । तेषामन्तर्व्याप्तिपक्षोऽभिमतः । प्रसङ्गप्रसङ्गविपर्ययाभ्यां दृष्टान्तधर्मिणि घटादौ ग्रहीतव्येत्यन्ये । तेषां बहिर्व्याप्तिपक्षोऽभिमतः । सत्त्वादन्येषां स्वभावहेतूनां कार्यहेतूनामनुपलम्भहेतूनां च दृष्टान्त एव व्याप्तिर्ग्रहीतव्या । तत्र शिंशपात्वस्य वृक्षव्यवहारयोग्यत्वे साध्ये दृष्टान्ते प्रत्यक्षानुपलम्भाभ्यां व्याप्तिर्ग्राह्या । सत्त्वक्षणिकत्वयोस्तु प्रसङ्गप्रसङ्गविपर्ययाभ्यां प्रमाणाभ्याम्, साध्यविपर्ययबाधकप्रमाणेन वा क्रमयौगपद्यनिवृत्तिलक्षणेन विकल्पे सिद्धे वस्तुत्वावस्तुत्वाभ्यां सन्दिह्यमाने विपक्षे धर्मिणि । कार्यहेतोर्धूमादेर्वह्न्यादिना महानसादौ दृष्टान्तधर्मिणि त्रिविधप्रत्यक्षानुपलम्भेन पञ्चविधप्रत्यक्षानुपलम्भतो वा ग्रहीतव्या । अनुपलम्भस्यासद्व्यवहारयोग्यत्वेन सह प्रत्यक्षेणैव । अन्येषां तु स्वभावहेतूनां कार्यहेतूनां च केषाञ्चित्केनचित्प्रमाणेनोन्नीय यथास्वं प्रतिपत्तव्येति । व्याप्त्यनिश्चये हेतोरनैकान्तिको दोषः । स च त्रिविधः । असाधारणः साधारणः सन्दिग्धविपक्षव्यावृत्तिकश्चेति । तत्र असाधारणोऽनैकान्तिको यथा सात्मकं जीवच्छरीरं प्राणादिमत्त्वादपरजीवच्छरीरवत् घटवत् । अयं हेतुरपरजीवच्छरीरे आत्मना व्याप्त इति न निश्चितः । घटे च विपक्षे आत्मनोऽभावान्निवृत्त इति न निश्चितः । धर्मिणि तु जीवच्छरीरे विद्यत एवेत्यसाधारणानैकान्तिक उच्यते । अपरश्चासाधारणः । यथाऽनित्यः शब्दः श्रावणत्वात् घटवत्, आकाशवत् । साधारणानैकान्तिको यथा – नित्यः शब्दः प्रमेयत्वात् । सन्दिग्धविपक्षव्यावृत्तिको यथा – स श्यामः तत्पुत्रत्वात् परिदृश्यमानपुत्रवदिति ।

यदुक्तं प्राक्, सत्त्वस्य क्षणिकत्वेन सह व्याप्तिः प्रसङ्गप्रसङ्गविपर्ययाभ्यां गृह्यत इति । तत्र कोऽयं प्रसङ्गो नाम ? । प्रमाणप्रसिद्धव्याप्तिकेन वाक्येन परस्यानिष्टत्वापादनाय प्रसञ्जनं प्रसङ्गः । यथा सामान्ये अनेकवृत्तित्वाभ्युपगमेऽनेकत्वप्रसञ्जनम् । तथा हि यदनेकवृत्ति

तदनेकं यथाऽनेकभाजनगतं तालफलम् । अनेकवृत्ति च सामान्यम् । तस्मादनेनाप्यनेकेन भवितव्यमिति प्रसङ्गः । अथानेकत्वं नेष्यते । तदाऽनेकवृत्तित्वं च मा स्वीकुर्वीथाः । ननु यद्येतत्प्रमाणं न भवति कथमस्योपन्यास इति । व्याप्तिस्मरणार्थं व्याप्त्येकदेशकथनवदिति । यदुक्तम् – ‘ प्रसङ्गो द्वयसम्बन्धादेकापायेऽन्यहानये ’ इति । अस्यायमर्थः । व्याप्यव्यापकयोः सम्बन्धे सति यदि व्यापकं नेष्यते तदा व्याप्यमपि नेष्यताम् । अथ व्याप्यमिष्यते । तदा व्यापकमीष्यतामिति ।

वादिना साधने उपन्यस्ते प्रतिवादिना दूषणं वक्तव्यमिति न्यायः । असिद्धविरुद्धानैकान्तिकानामन्यतमस्योद्भावनं दूषणम् । यथोक्तम् – ‘दूषणान्यूनताद्युक्ति’रिति । नन्वेषामेवोद्भावनं यदि दूषणं क्व तर्हि वैयर्थ्यासामर्थ्यातिप्रसङ्गानामन्तर्भाव इति । अत्रैव त्रिषु । तत्र वैयर्थ्यं तावदसिद्धेऽन्तर्भवति । सन्दिग्धसाध्यधर्मो हि हेतुरुच्यते । वैयर्थ्यं तु यत्रोपन्यस्यते तत्र सन्दिग्धसाध्यधर्मकत्वं हेतोर्लक्षणं नास्तीत्यसिद्ध उच्यते । यदुक्तम् – ‘ सन्दिग्धे हेतुवचनाद्व्यस्तो हेतोरनाश्रयः ’ । असामर्थ्यं तु स्वरूपासिद्धावन्तर्भवति । न हि सामर्थ्यं नाम हेतुस्वरूपादन्यत् । हेतोरवस्तुत्वप्रसङ्गात् । अतिप्रसङ्गः पुनरनैकान्तिकेऽन्तर्भाव्यः । साध्यमर्थमतिक्रम्य विपक्षेऽपि प्रसक्तेरिति । यत्र तु धर्मिणि साध्यं साधयितुमारब्धं तस्य धर्मिणः प्रमाणबाधितत्वेऽऽश्रयासिद्धिर्हेतोर्दूषणम् । यथा सर्वगतआत्मा सर्वत्रोपलभ्यमानगुणत्वात् । तदिह बौद्धस्यात्मैव न सिद्धः । किं पुनरस्य सर्वदेशोपलभ्यमानगुणत्वं सेत्स्यति । तथा हि तीर्थिकाः खल्वेवं वदन्ति । शरीरादिवस्तुव्यतिरिक्तं शुभाशुभकर्तृतत्फलोपभोक्तृनित्यव्यापिरूपमात्माख्यं द्रव्यान्तरमस्ति । तेन च यदि नाम विश्वं व्याप्तं तथाऽपि यदुपभोगायतनतया परिगृहीतं जीवच्छरीरं तदेव सात्मकमभिधीयते । एतच्चायुक्तम् । आत्मनः सिद्धये प्रमाणाभावात् । न हि प्रत्यक्षेणात्मा प्रतीयते । चक्षुरादिज्ञानानां रूपादिपञ्चविषयनियतत्वान्मानसस्याप्यहंप्रत्ययस्य शरीरादिविषयत्वात् । गौरोऽहं स्थूलोऽहं गच्छाम्यहमित्यादिना कारणेनाहंप्रत्ययं उत्पद्यते । यदाहालङ्कारकारः–

‘ अहमित्यपि यज्ज्ञानं तच्छरीरेन्द्रियांशवित् ।
अहं काणः सुखी गौरः समानाधारवेदनात् ॥ ’

न चास्य शरीरव्यतिरिक्तस्य धर्मो गौरत्वं स्थूलत्वं वा। न च विभोरमूर्त्तस्य मूर्त्तद्रव्यानुविधायिनी गमनादिक्रिया युक्तिमती। नाप्ययं माणवके सिंहप्रत्ययवत् भाक्तो युक्तः, स्खलद्वृत्तिप्रसङ्गात्। नाप्यनुमानेन प्रतीयते कार्यस्वभावलिङ्गाभावान्नित्यपरोक्षेण च देशकालव्यतिरेकविकलेनात्मना सह कस्य चिदन्वयव्यतिरेकात्मककार्यकारणभावासिद्धेः कार्यलिङ्गायोगात्। धर्मिसत्ताया असिद्धत्वात् स्वभावलिङ्गानुपपत्तेः। न चान्यल्लिङ्गमस्ति। अन्येनापि लिङ्गेन भवता साध्यव्याप्तेन भवितव्यम्। तस्य च सर्वथासिद्धेः कथं व्याप्तत्वं लिङ्गस्य निश्चीयताम्। अपि च किमयमात्मा बोधरूपोऽबोधरूपो वा। यदि बोधरूपो नित्यश्च तदा चक्षुरादिवैफल्यप्रसङ्गो दुर्वारः। अथानित्योबोधरूपस्तदानीं ज्ञानस्यैवात्मेति नाम कृतं न कापि विप्रतिपत्तिः। अथाबोधस्वरूपोऽदृश्यश्च तदाऽनुपलम्भोऽस्य सत्तां न क्षमत इति निरात्मकसिद्धिरनवद्या। तस्मात्सर्वं संस्कृतं वस्तु निरात्मकमिति।

स्वरूपासिद्ध्याऽप्यसिद्धो हेत्वाभासो भवति। यथाऽनित्यः शब्दश्चाक्षुषत्वादिति। ननु व्याप्त्यसिद्धिरपि दूषणम्। तेनापि परेष्टासिद्धेः। तत्किं नोच्यते। [1]अनैकान्तिकदूषणेनैव गतार्थत्वात्पृथङ्नोक्तम्। तथा हि न स्वलक्षणाभ्यां व्याप्तिर्ग्रहीतव्या। स्वलक्षणस्य देशकालाकारनियतत्वेनान्यत्रानुगमाभावात्। अपि तु साध्यसाधनसामान्याभ्यामेव ग्रहीतव्या। तत्र यदि साधनं साध्येन व्याप्तं न प्रतीयेत तदा साधनं च स्यात् साध्यं च न स्यादित्यनैकान्तिकमेवेति।

ननु सामान्यं चेदप्रसिद्धम्। तत्कथं साध्यसाधनसामान्याभ्यां सर्वोपसंहारवती व्याप्तिः प्रमाणेन गृह्यते। नैष दोषः। यतो यादृशं सामान्यं परैः परिकल्प्यते तादृशं प्रमाणेन बाध्यत इति नाभ्युपेयं तत्सौगतैः। न तु व्यवहारसिद्धमन्यव्यावृत्तिलक्षणमपोहसंज्ञकमपि। ननु कोऽयमपोहो नाम?। यथाव्यवसायं बाह्य एव घटादिरर्थोऽपोह इत्यभिधीयते। अपोह्यतेऽस्मादन्यद्विजातीयमिति कृत्वा। यथाप्रतिभासंबुद्ध्याकारोऽपोहः। अपोह्यते पृथक्क्रियतेऽस्मिन् बुद्ध्याकारे विजातीयमिति कृत्वा। यथातत्त्वं निवृत्तिमात्रं प्रसज्यरूपोऽपोहः। अ-

---

१. अत्रानैकान्तिकेति क. ग. पाठः।

पोहनमपोह इति कृत्वा। ननु यथाऽध्यवसायं विधिरेव तर्हि केवलो विषय इत्यागतम्। न। अन्यापोहविशिष्टो विधिरभिप्रेतः। यत्तु गोप्रतीतौ (न?ना) गवात्मा गवात्मेति सामर्थ्यादपोहः पश्चान्निश्चीयत इति विधिवादिनां मतम्। अन्यापोहप्रतिपत्तौ च सामर्थ्यादन्यापोढगवादिरर्थोऽवधार्यत इति निवृत्त्यपोहवादिनां मतम्। तन्न युक्तम्। व्यवहारकाले प्रथमं प्रवर्त्तमानस्यापि क्रमादर्शनात्। न हि विधिं प्रतिपद्य कश्चिदर्थापत्तितः पश्चादपोहमधिगच्छति। अपोहं वा प्रतिपद्य पश्चादन्यापोढमवगच्छति। तस्माद्गोप्रतिपत्तिरित्यन्यापोढप्रतिपत्तिरुच्यते। यद्यपि गोशब्दादुच्चरितादन्यापोढशब्दानुल्लेखः, तथाऽपि नाप्रतिपत्तिरेव विशेषणभूतस्यापोहस्य। अगवापोढ एव वस्तुनि गोशब्दस्य सङ्केतितत्वात्। यथा नीलोत्पलसङ्केतितेन्दीवरशब्दान्नीलोत्पलप्रतीतौ तत्काल एव नीलिमस्फुरणमनिवार्यं तथा गोशब्दादप्यगवापोढे सङ्केतिताद्गोप्रतीतौ तुल्यकालमेव विशेषणत्वादपोहस्यागवापोहस्फुरणमनिवार्यम्। यथाच प्रत्यक्षस्य प्रसज्यरूपाभावग्रहणमभावविकल्पोत्पादनशक्तिरेव तथा विकल्पानामपि तदनुरूपानुष्ठानशक्तिरेवाभावग्रहणमुच्यते। अन्यथा यदि शब्दादर्थप्रतिपत्तिकाले नावगतः परापोहः कथं तर्ह्यन्यपरिहारेण प्रतिपत्ता गवि प्रवर्त्तताम्। ततो गां बधानेति चोदितोऽश्वानपि बध्नीयादिति। तस्मात्स्थितमेतत्। बाह्योऽर्थोऽध्यवसायादेव शब्दवाच्यो व्यवस्थाप्यते, न तु स्वलक्षणपरिस्फूर्त्या, प्रत्यक्षवद्देशकालाकारनियत[1]व्यक्तस्वलक्षणास्फुरणात्। यदाह न्यायपरमेश्वरः –

'शब्देनाव्यापृताक्षस्य बुद्धावप्रतिभासनात्। अर्थस्य दृष्टाविवे' ति।

किञ्च स्वलक्षणात्मनि वाच्ये सर्वात्मना प्रतिपत्तेर्विधिनिषेधयोरयोगः। तस्य हि सद्भावेऽस्तीति व्यर्थम्। नास्तीत्यसमर्थम्। अस्ति चास्त्यादिपदप्रयोगः। तस्मान्न परमार्थतः स्वलक्षणं शब्दैरभिधीयत इति स्थितम्।

ननु यथा प्रत्यक्षेण घटस्वरूपे गृहीते पश्चात्तत्रैव क्षणिकत्वादिनिश्चयार्थं प्रमाणान्तरं प्रवर्त्तते। तथा वृक्षशब्देन वृक्षत्वांशे प्रतिपादिते

---

१. प्रत्यक्ष. ख. पाठः।

सत्त्वांशनिश्चयार्थमस्त्यादिप्रयोगो भविष्यतीति चेत् न । प्रत्यक्षस्यानिश्चयात्मकत्वादनभ्यस्तरूपविषये प्रमाणान्तरं प्रवर्तत इति युक्तम् । विकल्पस्य तु स्वयं निश्चयात्मकत्वाद्गृहीते स्वरूपे किं प्रमाणान्तरेणापरेण ग्रहीतव्यमिति । यादृशं सामान्यं परैः परिकल्प्यतेऽनेकव्यक्तिसमवेतं दृश्यात्मकं नित्यं तादृशस्य सत्तासाधकं न किञ्चित्प्रमाणमुपलभामहे । ततो न सदिति व्यवस्थापयितुं युक्तम् । तथा हि गवादिव्यक्त्यनुभवकाले वर्णसंस्थानात्मकं व्यक्तिरूपमपहाय नान्यत्किञ्चिदेकमनुयायि प्रत्यक्षे प्रतिभासते । तादृशस्यानुभवाभावात् । नापि स्वलक्षणानुभवानन्तरमेकाकारपरामर्शप्रत्ययादन्यथानुपपत्त्या सामान्यपरिकल्पनं युक्तिसङ्गतम् । व्यक्तिभ्य एव स्वहेतुदत्तशक्तिभ्योऽस्य प्रत्ययस्य परम्परोत्पत्तेः । भेदेऽपि काश्चिदेव व्यक्तयोऽस्य जननाय समर्थाः न सर्वा इत्यत्र कार्यकारणभावस्य प्रत्यक्षानुपलम्भाभ्यां दृष्टस्यातिवर्तयितुमशक्यत्वात् । दृष्टं चेदं सामर्थ्यम् । भेदा[1]विशेषेऽपि कासाञ्चिदेव व्यक्तीनाम्, यथा ज्वरादिशमने गुडूचिनिम्बादीनाम् । यथोक्तम् – ‘ भेदेऽपि नियताः केचित्स्वभावेनेन्द्रियादिवत् । ’ किञ्च सर्वतो विजातीयाद्व्यावृत्तेऽपि सामान्ये किमिति भेदाविशेषेऽपि गोव्यक्तिष्वेव समवेतं तत्रैव चैकाकारां प्रतीतिं जनयतीति प्रश्ने स्वभावेनोत्तरं परस्य । तच्च प्रमाणासङ्गतम् । अस्माकं तु स्वभावेनोत्तरं प्रमाणसिद्धत्वात् । तथेदमपरं जातिसाधनं परस्य यद्विशिष्टं ज्ञानं तद्विशेषणग्रहणनान्तरीयकं यथा दण्डिज्ञानम् । विशिष्टज्ञानं चेदं गौरयमित्यर्थतः कार्यहेतुः । अत्रोच्यते – विशिष्टबुद्धेर्भिन्नविशेषणग्रहणनान्तरीयकत्वं साध्यं विशेषणमात्रानुभवनान्तरीयकत्वं वा । प्रथमपक्षेऽस्य प्रत्यक्षबाधा । वस्तुग्राहिणि प्रत्यक्षे उभयप्रतिभासाभावात् । विशिष्टबुद्धित्वं च सामान्यं हेतुरनैकान्तिकः भिन्नविशेषणग्रहणमन्तरेणापि तस्य दर्शनात् । यथा स्वरूपवान् घटः । गोत्वं सामान्यमिति वा । द्वितीयपक्षे तु सिद्धसाधनम् । स्वरूपवान् घट इत्यादिवद्गोत्वजातिमान् पिण्ड इति परिकल्पितभेदमुपादाय विशेषणविशेष्यभावस्येष्टत्वात् । अगोव्यावृत्त्यनुभवभावित्वाद्गौरयमिति व्यवहारस्य । तदेवं परपरिकल्पितसामान्यस्य विचारासहत्वादतद्रूपपरावृत्तवस्तुमात्रमेव

१. भेदादि विशेषेऽपि. ख. पाठः ।

सामान्यमपोहशब्दवाच्यं व्यवहाराङ्गं यथाध्यवसायमनवद्यमिति स्थितम् । सामान्यस्य निषेधाय प्रयोगः पुनरेवंविधः कर्त्तव्यः । यद्यत्रोपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते तत्तत्रासद्व्यवहारविषयः । यथा तुरङ्गमोत्तमाङ्गे शृङ्गम् । नोपलभ्यते चोपलब्धिलक्षणप्राप्तं सामान्यं परिदृश्यमानासु व्यक्तिषु । इति स्वभावानुपलब्धिः । न चासिद्धिसम्भावना । वर्णसंस्थान(र?स)हितं व्यक्तिरूपमपहाय द्वितीयस्यानुयायिनो रूपस्य निपुणमपि निरूप्यमाणस्य सर्वदा दर्श[1](न?ना)सम्भवात् । नापि ज्ञानवद्दर्शनाभावेऽपि प्रत्यक्षसिद्धत्वमस्याभिधातुमुचितम् । ज्ञानं हि स्वसंवेदनप्रमाणसिद्धम् । नतु चक्षुर्विज्ञानग्राह्यम् । इदं[2] चक्षुर्विज्ञानग्राह्यमर्थधर्मत्वात् । पत्यक्षं च परैरिष्टमिति । तस्मात्सर्वं संस्कृतं वस्तु परपरिकल्पितसामान्येन शून्यमिति स्थितम् ।

नापि केनचिद्बुद्धिमतोपरचितमित्यपि विज्ञेयम् । तथा ह्यस्य जगतः कर्त्ता भवन् नित्यो भवेदनित्यो वा । तत्र तावन्न नित्यो युक्तः । नित्ये कर्त्तरि समर्थे सति सर्गस्थितिप्रलयानां नियमेन यौगपद्यप्रसङ्गात् । येन हि स्वरूपेण स्थितिप्रलययोः स कर्त्ता तदस्य स्वरूपं सर्गकालेऽपि सन्निहितमिति तदेव स्थितिप्रलयौ कुर्यात् । सहकारिविरहान्न करोतीति चेत्तदसत् । न हि नित्येन सहकारिणा कदाचिदयं विरहितः, सदा सन्निहितत्वात् । नाप्यनित्येन सहकारिणा विरहितः, अनित्यस्य सहकारिणोऽपि तदायत्तजन्मत्वात् । तत एकदा सर्वकरणादिप्रसङ्गः । ननु बुद्धिमत्त्वादीश्वरस्य नैष दोषः । बुद्धिशून्यो हि स्वसत्तामात्रजन्यं कार्यमक्रमेणैव कुर्यात् । बुद्धिमांस्तु कर्त्तुमीशानोऽप्यनिच्छन्न करोतीति कस्तस्योपा[3]लम्भः । उच्यते । ता अपीच्छाः स्वसत्तामात्रनिबन्धनाः किं न करोतीति स एवास्योपालम्भः । अथ स्वरूपेण सामर्थ्ये सत्यपि एष एव स्वभावः । सहकारिलक्षणयाऽऽगन्तुकशक्त्या विना न करोतीति चेत्, तर्हि माताऽपि सती वन्ध्या सा प्रकृत्यैवैतदपि वक्तव्यं भवेद्भवतामिति यत्किञ्चिदेतत् । नन्वेष एव कार्यस्य स्वभावः केवलात्समर्थादपि नोदेति । सहकारिणमपेक्ष्यैव भवति । तन्न युक्तम् । समर्थो हि कार्यापेक्षामनादृत्य बलादेव कार्यं

१, दर्शनभावात् । क. ख. ग. पाठः । २, इदं तु. क. ख. पाठः । ३, उपलम्भः ख. पाठः ।

कुर्यात् । अन्यथा ह्यसमर्थताप्रसङ्गः । नापि नित्यः क्रमेणार्थकारीति युक्तं निरपेक्षत्वात् । यदाह दिङ्मण्डलविख्यातकीर्त्तिः कीर्त्तिः–

'नित्यस्य निरपेक्षत्वात् क्रमोत्पत्तिर्न युज्यते ।
क्रियायामक्रियायां च कालयोः सदृशात्मनः ॥'

एतेन नित्यानामात्मादीनामक्षणिकानां घटादीनां क्रमेण कार्यकरणं प्रत्युक्तम् । न चात्र प्रत्यक्षविरोधः । प्रत्यक्षेणाक्षणिकस्य ग्रहणायोगात् । न हि क्षणिकं प्रत्यक्षमक्षणिकमीक्षितुं क्षमते । अनेकक्षणव्यापारो ह्यक्षणिकः । स कथमेकक्षणभाविनाऽध्यक्षेण ग्रहीतुं शक्यः । न हि प्रागूर्ध्वमवस्थानमधुना प्रकाशते । तस्याप्यधुनात्वप्रसङ्गात् । जन्मविनाशावधि प्रतिभासप्रसङ्गादिति न किञ्चित्प्रत्यक्षं पूर्वापरकालव्याप्तिमर्थस्य ग्रहीतुमलम् । एतेन प्रत्यभिज्ञानस्याप्रत्यक्षत्वं व्याख्यातम् । साक्षात्कारि हि ज्ञानं प्रत्यक्षम् । न च प्रागवस्थमधुना साक्षात्कर्त्तव्यम्, अपि तु स्मर्त्तव्यम् । न च स्मरणरूपं प्रत्यक्षम् । अथ मतं भवेदिदं स्मरणं यदिदानीन्तनमवस्थानं न साक्षात्कुर्यात्, तत्साक्षात्करणप्रवणं कथमिदं स्मरणं नाम । यदाह भट्टः –

'पूर्वप्रमितमात्रे हि जायते स इति स्मृतिः ।
स एवायमितीयं तु प्रत्यभिज्ञातिरेकिणी ॥'

इति । स्मरणग्रहणस्वरूपं तर्हि प्रत्यभिज्ञानं स्यात् । न तु ग्रहणमेव । स्मर्यमाणे ग्रहणायोगात् गृह्यमाणे च स्मरणायोगात् । न चैकस्य स्मरणग्रहणे सम्भवतः परस्परविरोधात् । येन हि रूपेण स्मरणं न तेन रूपेण ग्रहणमित्यनुन्मत्तेन न शक्यते वक्तुम् । रूपान्तरेण ग्रहणे नैकस्य स्मरणग्रहणे स्याताम् । भावेऽपि प्रत्यक्षाप्रत्यक्षत्वं स्यात् । न तु प्रत्यक्षत्वमेव । स्मर्यमाणे प्रत्यक्षायोगात् । तस्मात्प्रत्यभिज्ञाप्रत्ययो भ्रान्त एव निर्विषयत्वात् । प्रयोगश्चैवं यः प्रत्यभिज्ञाप्रत्ययः स तत्वतो नैकालम्बनो यथा लूनपुनर्जाततृणादिषु, प्रत्यभिज्ञाप्रत्ययश्चायं तदेवेदं नीलादीति प्रत्यय इति विरुद्धव्याप्तोपलब्धिः । एकत्वानेकत्वयोः परस्परविरोधात् । तद्विषययोरपि संवेदनयोर्विरोधः । तेनैकालम्बनविरुद्धेनानेकालम्बनेन पूर्वोक्तया नीत्या प्रत्यभिज्ञाप्रत्ययो व्याप्त इति न प्रत्यभिज्ञानं क्षणिकानुमानबाधकम् । न च केशादिष्वपि सामान्या-

वलम्बनतयैकालम्बनत्वम् । केशादिव्यक्तेरेव प्रत्यभिज्ञायमानत्वात् । सामान्ये प्रत्यभिज्ञायमाने तदेवेदं केशत्वादीति स्यात् । न तदेवेदं केशादीति । अत एवैकालम्बनत्वे प्रत्यभिज्ञानस्य क्रमेतराभ्यामुत्पत्तिविरोधात् विरुद्धानैकान्तिकत्वे नाशङ्कनीये । न च प्रत्यभिज्ञानमेव तदवस्थापकम्, तस्यैव विचार्यमाणत्वात् । तस्मात्स्थितमेतत् नित्यः कर्त्ता नास्तीति । यदि नित्यः कर्त्ता जगतो न कारणं किमस्य तर्हि कारणम् ? । सत्वानां शुभाशुभाख्यं कर्म । यथोक्तम् –

'सर्वलोकमथ भाजनलोकं चित्तमेव रचयत्यतिचित्रं ।
कर्मजं हि जगदुक्तमशेषं कर्म चित्तमवधूय च नास्ति ॥'

वैभाषिकमतमाश्रित्य भगवता तदुक्तम् –

'संस्कृतं क्षणिकं सर्वमात्मशून्यमकर्तृकम्'

ननु सर्वज्ञसिद्धौ हि तद्वचनं निदर्शनीकर्त्तुमुचितम् । सर्वज्ञसिद्धये किं प्रमाणमिति चेत् उच्यते । यो यः सादरनिरन्तरदीर्घकालाभ्याससहितचेतोगुणः स सर्वः स्फुटीभावयोग्यः । यथा युवत्याकारः कामिनः पुरुषस्य । यथोक्ताभ्याससहितचेतोगुणाश्चामी चतुरार्यसत्यविषयाकारा इति स्वभावहेतुः । न तावदाश्रयद्वारेण हेतुद्वारेण वाऽसिद्धिसम्भावना । सङ्कल्पारूढानां चतुरार्यसत्यविषयाणामाकाराणां धर्मिणां चेतोगुणमात्रस्य च हेतोः प्रत्यात्मवेद्यत्वात् । न चैष विरुद्धः सपक्षे कामिन्याकारे सम्भवात् । न चानैकान्तिकः । अभ्याससहितचेतोगुणस्फुटप्रतिभासयोः कारणकार्ययोः कुम्भकारघटयोरिव सर्वोपसंहारेण प्रत्यक्षानुपलम्भतः कार्यकारणभावसिद्धावभ्याससहितचेतोगुणस्य स्फुटप्रतिभासकरणयोग्यतया व्याप्तिसिद्धेः[१] । तथा हि व्याप्त्यधिकरणे काम्यन्तर्वर्त्तिनि युवत्याकारे सादरनिरन्तरदीर्घकालाभ्याससहितचेतोगुणात्पूर्वमनुपलब्धिः स्फुटाभत्त्वस्य, पश्चादभ्याससंवेदनं, स्फुटाभसंवेदनमिति त्रिविधप्रत्यक्षानुपलम्भसाध्यः कार्यकारणभावः स्फुटप्रतिभासाभ्याससचिवचित्ताकारयोरित्युपपन्ना सर्वोपसंहारवती व्याप्तिः । अतोऽनेकान्तिकताऽभावादनवद्यो हेतुः । नन्वनेन साधनेन चतुरार्यसत्याकाराणां साक्षात्करणाच्चतुरार्यसाक्षात्कारी सर्वज्ञः सिध्यति, न त्ववि[२]-

१. व्याप्तिसिद्धिः क. ग. पाठः २. नत्वविशेषण ग. पाठः ।

शेषेण सर्वधर्मसाक्षात्कारी । ततस्तत्सिद्धये साधनान्तरमभिधेयम् । उच्यते । यत्प्रमाणसंवादि निश्चितार्थं वचनं तत्साक्षात्पारम्पर्येण वा तदर्थसाक्षात्कारिज्ञानपूर्वकम् । यथा दहनो दाहक इति वचनम् । प्रमाणसंवादिनिश्चितार्थं चेदं वचनं क्षणिकाः सर्वसंस्कारा इत्यर्थतः कार्यहेतुः । नास्यासिद्धिः । सर्वधर्मक्षणभङ्गप्रसाधनादस्य वचनस्य सत्यार्थत्वात् । नापि विरुद्धः सपक्षे भावात् । न चानैकान्तिकता । वचनमात्रस्य संशयविपर्यासपूर्वकत्वेऽपि प्रमाणनिश्चितार्थस्य साक्षात्पारम्पर्येण वा तदर्थसाक्षात्कारिज्ञानपूर्वकत्वस्य प्रत्यक्षानुपलम्भाभ्यामुपलम्भात् । अन्यथा धूमादावपि हेतुत्यागप्रसङ्गादशेषकार्यहेतूच्छेदप्रसङ्गात् ।

स्यादेतत् । अनेकभवपरम्परालक्षणेन दीर्घकालेन भाव्यमानस्य सङ्कल्पारूढत्वं सम्भाव्यते । भवपरम्परासिद्धये तु किं प्रमाणम् ? उच्यते यच्चित्तं तच्चित्तान्तरं प्रतिसन्धत्ते । यथेदानीन्तनं चित्तम् । चित्तं च मरणकालभावीति स्वभावहेतुः । न चार्हच्चरमचित्तेन व्यभिचारः । तस्यागममात्रप्रतीतत्वात् निःक्लेशचित्तान्तरजननाद्वा । हेतोर्वा क्लेशे सतीति विशेषणापेक्षणादित्यनागतभवसिद्धिः । इह पूर्वजन्माभ्यासात्तपोदानाध्ययनादौ सर्वसत्वानामभ्यासे प्रवृत्तिरिति प्रवादः । ततस्तत्सिद्धये प्रमाणमुच्यते यच्चित्तं तच्चित्तान्तरपूर्वकम् । यथेदानीन्तनं चित्तम् । चित्तं च जन्मसमयभावीत्यर्थतः कार्यहेतुः । ननु च तत्त्वसाक्षात्करणान्मुक्तिः, तत्त्वं चैकमेव । यथोक्तम् –

‘ मुक्तिस्तु शून्यतादृष्टिस्तदर्थाशेषभावना । ’

तत्कथं सर्वज्ञद्वैतं बौद्धप्रभेदश्चेति । नैष दोषः । यस्मात्सर्वमेतद्भगवता सत्त्वानवतारयितुं भूतार्थे प्रतिपादितम् । तथा हि वैभाषिकाणां मतम् –

“ आकाशं द्वौ निरोधौ च नित्यं त्रयमसंस्कृतं ।
संस्कृतं क्षणिकं सर्वमात्मशून्यमकर्तृकम् ॥ ”

सौत्रान्तिकानां मतम् – ज्ञानमेवेदं सर्वं नीलाद्याकारेण प्रतिभाति न बाह्योर्थः । जडस्य प्रकाशायोगात् । यथोक्तम् –

‘ स्वाकारबुद्धिजनका दृश्या नेन्द्रियगोचराः । ’

अलङ्कारकारेणाप्युक्तम् –

' यदि संवेद्यते नीलं कथं बाह्यं तदुच्यते ।
न चे त्संवेद्यते नीलं कथं बाह्यं तदुच्यते ॥ ”

ननु यदि प्रकाशमानं ज्ञानमेवेदं तदाऽस्ति बाह्योऽर्थ इति कुतः । बाह्यार्थसिद्धिः स्याद्व्यतिरेकतः । न हि सर्वत्र सर्वदा नीलादय आकाराः प्रकाशन्ते । न चैतत्स्वोपादानमात्रबलभावित्वे सति युज्यते । नियतविषये प्रवृत्त्ययोगात् । तस्मादस्ति किञ्चिदेषां समनन्तरप्रत्ययव्यतिरिक्तं कारणं यद्बलेन क्वचित्कदाचिच्च भवन्तीति शक्यमवसातुम् । स एव बाह्योऽर्थ इति । कः पुनरसौ बाह्योऽर्थः । अवयवी गुणादयो धर्माः द्रव्याश्रयिणः पराभिमताः । नवविधं द्रव्यं परमाणवो वेति ? । तत्र न तावद्गुणादयो द्रव्यनिषेधेनैव तेषां निषिद्धत्वात् । न चासति समवायिनि द्रव्ये समवाय इति दूषणमपि नाद्रियते ? । द्रव्यं च पृथिव्यापस्तेजोवायुराकाशं कालो दिगात्मा मन इति नवविधम् । तत्रात्मनिषेधायेदमपि साधनम् यत्कादाचित्कं ज्ञानं तत्कादाचित्ककारणपूर्वकम् । यथा सौदामिनीज्ञानम् । कादाचित्कं चेदमहङ्कारज्ञानमित्यर्थतः कार्यहेतुः । नायमसिद्धः । अहङ्कारे धर्मिणि ज्ञानत्वस्य प्रत्यक्षसिद्धत्वात् । नापि कादाचित्कविशेषणमसिद्धम् । सर्वदाऽहमिति ज्ञानाभावात् । नापि विरुद्धः सपक्षे दर्शनात् । न चानैकान्तिकः । धूमपावकयोरिव कादाचित्कज्ञानकादाचित्ककारणयोः प्रत्यक्षानुपलम्भाभ्यां व्याप्तिसिद्धेः । कादाचित्कज्ञानस्य चाकादाचित्ककारणादुत्पत्तौ कादाचित्ककारणादनुत्पत्तिप्रसङ्गः । अनियतहेतुकतया चाहेतुकताप्रसङ्गः । तथाऽप्यनैकान्तिकत्वे प्रसिद्धधूमादिहेतुरप्यनैकान्तिकः स्याद्विशेषाभावात् । अपि चाहङ्कारस्याकादाचित्ककारणपूर्वकत्वे सदैवोत्पादप्रसङ्गः । कारणस्य कुर्वद्रूपत्वादकुर्वतश्चौपचारिककारणत्वात् । कुर्वदकुर्वतोश्चैक्याभावाद्भावे वा कुर्वतोऽप्यकुर्वतोऽप्युत्पत्तिस्तत्स्वभावात्[1] । किञ्चाहङ्कारस्याकादाचित्ककारणादुत्पादे युगपदेवोत्पादप्रसङ्गोऽव्यग्रसामग्रीकत्वात् । नन्वहङ्कारस्यालम्बनमात्मा[2] न कारणमिति चेन्न । अकारणस्यालम्बनत्वायोगादतिप्रसङ्गात् । अथ किमाकाशं नाम किञ्चिद्वस्तुभूतमस्ति ? । नास्ति वा ? । नास्त्येवैतत् । यत्र हि सप्रतिघं द्रव्यमस्ति न तत्राकाशमव-

१. स्त तत्स्वभावत्वात् । ख. पाठः । २. आत्माकारणमिति ग. पाठः ।

काशं ददाति । यत्र नास्ति तत्र तदभावादेवावकाशः सिद्ध इति । तत्काकाशमवकाशं दद्यात् ? । तस्मात्सत्यस्मिन् सर्वदा सर्वथा सर्वत्रावकाशः स्यात् । न चैतदस्ति । तस्मान्नास्त्येवाकाशमिति प्रतीमः । एतच्च वैभाषिकमतमपेक्ष्य दूषणमुक्तम् । परैस्त्वाकाशं शब्दगुणमिष्यते । तच्चैकमिति । समानदेशत्वात्सर्वशब्दानां विभागेन श्रवणं न स्यात् । ततः सन्निहितदेश इव दूरदेशाभिमतोऽपि शब्दः प्रतीयेत । न वान्योऽपीत्यनैकान्तिकः । दिक्कालयोश्चैकत्वात् पूर्वापरप्रत्ययानुपपत्तिः । एतेन नित्यस्यापि मनसोऽसम्भव एव । तथा हि युगपज्ज्ञानानुत्पत्त्या मनोऽनुमीयते तद्वादिभिः । अनुभूयन्त एव युगपद्बहूनि ज्ञानानि नर्त्तकीदर्शनादौ । यदि पुनर्मनः स्यात्तदानीमेतानि ज्ञानानि न युज्यन्ते । तस्मान्नास्त्येव मनोऽपि । पृथिव्यादयोऽवशिष्यन्ते । ते चावयविपरमाणुभेदेन द्विधा इष्यन्ते । तत्र योऽवयवी घटादिः परमाणुभिर्द्व्यणुकादिक्रमेणारब्धः प्रसिद्धः तस्योपलब्धिलक्षणप्राप्तस्यानुपलम्भो बाधक इत्युक्तम् । यद्यवयवी नास्ति कथमयमेकत्वेन प्रतिभासत इति चेत् –

' भागा एव हि भासन्ते सन्निविष्टास्तथा तथा ।
तद्वान्नैव पुनः कश्चिन्निर्भागः सम्प्रतीयते ॥ '

इत्युक्तम् । ननु कोऽयं भागप्रतिभासो नाम ? । नानादिग्देशावष्टम्भेन सञ्चितपरमाणुप्रतिभास एव । यद्येवं कथं ' प्रतिभासधर्मः स्थौल्य'मित्युक्तं धर्मोत्तरेण । तत्राप्ययमेवार्थः । अर्थस्य स्वरूपेण नास्ति वेदनम् । 'भाक्तं स्यादर्थवेदन'मिति वचनात् । तस्माद्योऽयं नीलादिप्रतिभासो नानादेशव्यापित्वेनानुभूयते स एव स्थूलप्रतिभास इत्यदोषः । येऽपि तदारम्भकाः परमाणवो वैशेषिकाणाम्, साक्षादक्षिगोचरा वैभाषिकाणां दर्शने, स्वाकारसमर्पणप्रवणाः सौत्रान्तिकानां मते तेऽपि योगाचाराणां मते न सम्भवन्ति । न खल्वेकः परमाणुः प्रसिद्धिमध्यास्ते । तस्याधरोत्तरं चतुर्दिक्षु परमाणुमध्यासीनस्य नियमेन षडंशतापत्तेः । यो ह्यस्य स्वभावः पूर्वपरमाणुप्रत्यासत्तौ न स एवापरपरमाणुप्रत्यासत्तौ घटते । तयोरेकदेशताप्राप्तेः । एवं च स पूर्वपरमाणुसहितस्वभावोऽपरः परमाणुं प्रत्यासीदेद्यदि सोऽपि तत्र स्यात् । असत्यामपि प्रत्यासत्तावाभिमुख्यमात्रेऽप्ययमेव वृत्तान्तः । ततः परमाणुमात्रं पिण्डः प्रसक्तः । अथवाऽयं विचारः । नाप्यनेकः परमाणुः ।

परमाणुशः परमाणोरयोगात्। तथा हि यद्यसौ सांशः स कथं परमाणुः?। अथ निरंशः, तदा संयुक्ताः परमाणवः सर्वात्मना संयोगात् परस्परमभिन्नदेशाः स्युरिति सर्वः पिण्डः परमाणुमात्रं स्यात्। पर्वतोऽपि क्षितिरपीति। तस्मादवश्यं तयोः स्वभावयोर्भेदोऽभ्युपेतव्यः। यथा चानयोस्तथाऽधरोत्तरदक्षिणोत्तरपरमाणुप्रत्यासन्नानां स्वभावानां भेद इति षडंशतैव परमाणोर्बलादापतति। यदाह –

'षट्केन युगपद्योगात्परमाणोः षडंशता।
षण्णां समानदेशत्वे पिण्डः स्यादणुमात्रकः॥'

न चैकासिद्धावनेकस्य सिद्धिरिति न सन्ति परमाणवः। यदि बाह्योऽर्थो नास्ति किं विषयस्तर्ह्ययं प्रतिभासः। खल्वेषोऽनादिविततवासनातः प्रवर्त्तमानो निरालम्बन एव सम्भाव्यते। तथा हि – सति विषये सावलम्बनता स्यात्। तेन चावयविना भवितव्यं परमाणुप्रचयेन वा। स चायमुभयोऽप्यनन्तरोक्तबाधकप्रमाणग्रस्तविग्रहो न व्योमतामरसमतिशेते। यथोक्तम् –

'प्रतिभासो निरालम्बः स्वप्नानुभवसन्निभः।'

स्वप्नज्ञानं तु निरालम्बनं विहितमेव। न च स्वप्नजाग्रदनुभवयोर्भेदः कश्चिदप्यस्ति। सर्वप्रकारसाधर्म्यदर्शनात्। न चानालम्बनादनवाप्तरूपविशेषं विज्ञानमालम्बनसम्बन्धमनुभवितुमुत्सहते। यदनालम्बनादविशिष्टं तदनालम्बनम्। यथैकस्मादाकाशकेशदर्शनाद्द्वितीयम्। अनालम्बनाच्च स्वप्नज्ञानादविशिष्टं च विवादाध्यासितं जाग्रद्विज्ञानमिति स्वभावहेतुः। यदि बाह्योऽर्थो नास्ति किं तर्हि सत्। ग्राह्यग्राहकादिकलङ्कानङ्कितं निष्प्रपञ्चज्ञानमात्रं परमार्थसत्। यथोक्तम् –

'ग्राह्यग्राहकनिर्मुक्तं विज्ञानं परमार्थसत्।'

पुनश्चोक्तम् –

'नान्योऽनुभाव्यो बुद्ध्याऽस्ति तस्या नानुभवोऽपरः।
ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते॥'

उक्तं चैतद्भगवता –

'बाह्यो न विद्यते ह्यर्थो यथा बालैर्विकल्प्यते।
वासनालुठितं चित्तमर्थाभासं प्रवर्त्तते'

तत्र केचिदाहुः – विज्ञानमेवेदं सर्वं शरीरादिविषयभावेन प्रसिद्धम्। तच्च स्वसंवेदनमिति न कस्यचिद्ग्राह्यं ग्राहकं वा। कल्पनया तु ग्राह्यग्राहकभाव इति व्यवस्थाप्यते। ततः परिकल्पितग्राह्यग्राहकभावरहितं विज्ञानं सत्यमिति। अन्ये तु सकलाकारकलङ्कानङ्कितं शुद्धस्फटिकसङ्काशं वास्तवं विज्ञानम्। आकारास्त्वमी वितथा एवाविद्यया दर्शिताः प्रकाशन्ते। तस्माद्ग्राह्यं नाम नास्त्येव ग्राह्याभावात्। तदपेक्षया ग्राहकत्वं विज्ञानस्य यत् तदपि नास्तीति। माध्यमिकानां तु दर्शने तदपि ज्ञानं न परमार्थसत्। विचारासहत्वात्। स्वभावेन हि युक्तं परमार्थिकमुच्यते लोके। न चास्य विचारतः कश्चिन्स्वभावो घटते एको वाऽनेको वा। यथोक्तम् –

‘ नेष्टं तदपि धीराणां विज्ञानं पारमार्थिकम्।
एकानेकस्वभावेन वियोगाद्गगनाब्जवत्॥ ’

कीर्त्तिपादैरप्युक्तम् –

“ भावा येन निरूप्यन्ते तद्रूपं नास्ति तत्त्वतः।
यस्मादेकमनेकं वा रूपं तेषु न विद्यते॥ ”

तथाऽलङ्कारकारेणाप्युक्तम् –

“ यदा तु न विकल्पस्य न चान्यस्य प्रमाणता।
तदा विशीर्यमाणे तु सर्वस्मिन् कोऽपराध्यतु॥
बन्धमुक्तादिभेदोऽपि नैवास्ति परमार्थतः।
भेदो हि नावभात्येव सर्वत्र समदर्शिनाम्॥ ”

प्रयोगः पुनरेवम्। यदेकानेकस्वभावं न भवति न तत्परमार्थसत्। यथा व्योमकमलं एकानेकस्वभावं च न भवति विज्ञानमिति व्यापकानुपलब्धिः। न तावदसिद्धो हेतुः। साकारे विज्ञाने बहिरर्थे इव एकानेकस्वभावायोग्यस्य परिस्फुटत्वात्। यत्र हि लोकस्य बाह्यार्थव्यवहारः तदेव साकारवादिनो ज्ञानम्। ततो यत्तस्य बहिर्भावे भावबाधकं तदेवान्तर्भावेऽपीति। बाधकेन हि स्थूलमेकमनेकं च परमाणुरूपमपोह्यते। विज्ञानात्मकश्चायमाकारो यद्येकः स्थूलो यदि वाऽनेकः परमाणुशो भिन्न उभयथाऽपि बाह्यार्थभावि दूषणमशक्यमुद्धर्त्तुम्। न हि तार्द्धज्ञानं बहिर्भावनिबन्धनम्, दूषणं येन तदभावेन भवेत्। मूर्त्तनि-

मित्तं बाधकं नामूर्त्ते विज्ञानात्मनीत्यपि निःसारम्। साकारतायां ज्ञानस्यापि मूर्त्तत्वादयमेव हि [1]देशचित्तानामाकारो मूर्त्तिरिति ।

श्रीमद्राजजगद्दलविहारीयमहायतिभिक्षुमोक्षाकरगुप्तविरचितायां तर्कभाषायां परार्थानुमानपरिच्छेदः समाप्तः ।

तर्कभाषामिमां कृत्वा पुण्यमासादि यन्मया ।
तेन पुण्येन लोकोऽयं बुद्धत्वमधिगच्छतु ॥

---

ग्रन्थाग्रं श्लोकमानं ८४०

यादृशं पुस्तके दृष्टं तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥
उदकानलचौरेभ्यः मूर्खकेभ्यस्तथैव ।
कष्टेन लिखितं शास्त्रं यत्नेन परिपालयेत् ॥

---

१. हिताना० ख. पाठः

श्रीः

# तर्कभाषाटीका

अप्रस्खलितलक्ष्येयमनुकूला मतिर्मम ।
दर्शने दर्शने भूयाद्यथावदवबोधिनी ॥ १ ॥

आप्तानां माननीयानामादेशमनुपालयन् ।
करोमि तर्कभाषाया व्याख्यामनतिविस्तृताम् ॥ २ ॥

प्रमाणनिरूपणप्रधानं प्रकरणमारभमाणः प्रथममारिप्सितस्य प्रकरणस्याभिधेयप्रयोजनं
1·4 दर्शयन्नवतारयति प्रकरणम्—**इहे**त्यादिना प्रमाणं निर्णेतव्यमित्यन्तेन । स्वरूपतो लक्षणतः फलतश्च प्रमाणनिर्णयः प्रकरणस्यास्य साक्षात्प्रयोजनमिति गम्यते । प्रकरणस्यास्याभिधेयं च प्रमाणमित्यर्थसिद्धम् । यद्यपि निबन्धावसाने वैभाषिकादिमतभेदचतुष्टयं दिङ्मात्रेण ज्ञाप्यते । अथापि प्राधान्यं प्रमाणस्य । प्रमाणपथं निर्णीय प्रवर्त्तमानानां पुरुषार्थसिद्धिरिति परमं प्रयोजनं '**सर्वपुरुषार्थसिद्धिनिमित्तं प्रमाणमनुसरद्भि**' रित्यनेन गम्यते, ये यतन्ते न ते सर्वेऽर्थमनु । अर्थविधुरेऽपि मन्दानामारम्भो हि दृश्यते । अर्थिनोऽपि न सर्वे प्रमाणमनुसरन्ति । पशूनामिव पामराणां बहूनामविचारितप्रमाणस्वरूपाणामप्यर्थाय प्रवृत्तिर्दृष्टा । प्रेक्षापूर्वकारिणोऽपि ये पुनराप्तकामा अकामा वा न तेषां प्रमाणापेक्षा । ये तु प्रेक्षापरायणा अर्थिनस्ते पुरुषार्थसिद्धये प्रमाणमनुसरेयुरेव । तदिदमभिप्रेत्याह—**प्रेक्षापरायणार्थिभिरि**ति । प्रेक्षावतां निबन्धे प्रवृत्त्यङ्गमभिधेयप्रयोजनमिति व्यक्तीकृतं भवति । यद्यपि पुरुषार्थसिद्धये प्रेक्षावद्भिः प्रमेयस्वरूपमपि निर्णेतव्यम् । अथापि प्रमेयसिद्धिः प्रमाणाधीनेति प्रमेयनिर्णयतः प्राक् प्रमाणस्वरूपं निर्णेतव्यम्, इदमभिप्रेत्योच्यते—**आदा**विति । एतेन प्रमेयस्वरूपनिरूपणपरान्निबन्धात् प्रमाणस्वरूपनिरूपणपरस्यास्य निबन्धस्य प्राधान्यं गम्यते ।

अथ प्रमाणसामान्यलक्षणमाह—**प्रमाणं सम्यग्ज्ञानमपूर्वगोचर**मिति । प्रमाणमिति
1·11 लक्ष्यनिर्देशः । सम्यग्ज्ञानमपूर्वगोचरमिति लक्षणनिर्देशः । ज्ञाने सम्यक्त्वं निर्वक्ति—**अविसंवादक**मिति । सम्यक्त्वविशेषणस्य प्रयोजनं निरूपयन्नाह—**संशये**ति । संशयविपर्ययौ यद्यप्यपूर्वगोचरौ, अथाप्यविसंवादकत्वं नास्तीति नातिप्रसङ्ग इति भावः । संशयविपर्यययोरविसंवादकता नास्तीत्येतदुपपादयन्नविसंवादकत्वं व्याचष्टे—**गोचरे तु तत्स्थाने घटादौ सती**ति । प्रदर्शितमर्थं प्रापयद् ज्ञानमविसंवादकमिति यावत् । नन्वद्वयनिवेशाच्चलद्वृक्षादिभ्रमो व्यावर्त्यते । जलादिप्रत्यक्षं जलाय प्रवर्त्तयत् पुरुषं जलं प्रापयति । मरीचिकाजलभ्रमस्तु जलाय प्रवर्त्तयत् पुरुषं जलं न प्रापयति । अतो नाप्रसङ्गातिप्रसङ्गौ ।

प्रापणयोग्यत्वमिति योग्यत्वनिवेशान्नाव्याप्तिशङ्कावकाश इत्येतच्छङ्कापरिहारमुखेन निरूपयति—**नन्वि**त्यादिना । कदाचित्—असति लिप्सादौ । प्रापयत् जनयद्वा प्रापयेत्, प्रवर्तयद्वा, यथा विद्या विवेकं जनयन्ती प्रापयति, देवदत्तो यज्ञदत्तं कर्मसु प्रवर्त्तयन् धनं

प्रापयति। तत्र सतश्चार्थस्य न सम्यग्ज्ञानेन जननम्, नापि प्रवर्त्तयत् प्रापयत्यर्थं सर्वमेव ज्ञानम्, अवधृतेऽप्यर्थेऽप्रवृत्तिदर्शनात्, तत् अर्थप्राप्त्याधायकत्वरूपमविसंवादित्वमव्याप्तमिति भावः। परिहरति–नेति। अयं भावः–अविसंवादकत्वं नार्थप्राप्त्याधायकत्वम्, अपि त्वर्थप्रापणयोग्यत्वमेव, तच्च प्रवर्त्तनशक्ततालक्षणं, सा चार्थनिर्णयाधानमेव। येन निर्णयेन प्रवृत्तः पुरुषोऽसति प्रतिबन्धे प्रदर्शितमर्थं प्राप्नुयादेवेति। आह च धर्मोत्तराचार्यः–'प्रवर्त्तकत्वमपि प्रवृत्तिविषयप्रदर्शकत्वमेव, न हि पुरुष इव हठात् प्रवर्तयितुं शक्नोति विज्ञानम्' इति, (न्यायबिन्दुटीका. प. ३) आह च कमलशीलः– अविसंवादित्वं चार्थक्रियासमर्थार्थप्रापणशक्तिकत्वं न त्वर्थप्रापणमेव' इति (तत्त्वसंग्रहपञ्जिका प. ३१२).

प्रमाणकार्यमर्थपरिच्छित्तिविशेषं निरूपयंस्तदाधानमात्रेणैव प्रमाणस्यार्थक्रिया-
1.14 समर्थवस्तुप्रापणयोग्यतासम्पत्तिमुपपादयति- **अपित्वेवंभूतेऽस्मिन्नित्यादिना**। एवं स्फुटमवभासमानेऽस्मिन्निर्भास्यमान आकारो नान्यस्मिन्नित्यवधारणं कार्यम्, इदमेवावधारणं प्रमाणकार्यमिति भावः। आह च कमलशीलस्तत्त्वसंग्रहपञ्जिकायाम् 'प्रत्यक्षं कल्पनापोढमपि सजातीयविजातीयव्यावृत्तमनलादिकमर्थं तदाकारनिर्भासोत्पत्तितः परिच्छिन्ददुत्पद्यते. तच्च नियतरूपवस्तुग्राहित्वाद्विजातीयव्यावृत्तवस्त्वाकारानुगतत्वाच्च तत्रैव वस्तुनि विधिप्रतिषेधावाविर्भावयति' अनलोऽयं नासौ कुसुमस्तबकादिरिति' इति (तत्त्व. प. प. ३९०) आह च तत्रैवानुपदम्–' ज्ञानं हि विषयाकारमुत्पद्यमानं विषयं परिच्छिन्ददिव सव्यापारमिव भवति' अयमेवार्थप्रापणव्यापारो ज्ञानस्येति। (तत्त्वसं–पञ्जि. प. ३९९) इदं चाहोत्तरत्र-' अर्थक्रियार्थिनोऽभिमतमर्थं प्रापयत् प्रमाणमुच्यते, न चार्थदेशं पुरुषमुपसर्पयदर्थं वा पुरुषदेशमानयत् प्रापकं भवति, अपि तु पुरुषं प्रवर्त्तयत्, तं च पुरुषं न हस्तेन गृहीत्वा प्रवर्त्तयति, किं तर्हि ?, प्रवृत्तिविषयमुपदर्शयत्, तथोपदर्शनं प्रतिभासमानार्थव्यवसायान्नान्यत्' इति। (तत्त्वः पञ्जि. प. ७८३) एतावतैव–निश्चयोत्पादनादेव। प्रामाण्यमविरुद्धम्–प्रापणशक्तिमत्त्वात् प्रामाण्यमक्षतमिति यावत्।

1.16 क्वचित्प्रवृत्त्यभावः, क्वचित्प्रवृत्तावप्यर्थालाभः स्वस्वसामग्र्यभावप्रयुक्त इति प्रमाणस्य प्रामाण्यमक्षतमेवेत्येतदुपपादयति–**पुरुषस्त्विति**। प्रमाणफलमर्थनिर्णयः, निर्णीते प्रयोजनत्वबुद्धिः प्रवृत्तौ कारणं, प्रवृत्तावपि तदलाभः प्रतिबन्धादिति फलफलिभावे भेदादलाभादप्रवृत्तेर्वा प्रमाणस्य प्रामाण्यं न प्रतिरुध्यत इति भावः। इदमेवाभिप्रेत्याह–**तदा ज्ञानस्य कृमायात**मिति। आह च शान्तरक्षितः–

'विषयाधिगतिश्चात्र प्रमाणफलमिष्यते' इति (तत्त्वसं. प. ३९८)

2.8 शङ्कते–**नन्विद**मिति[1]। अयमाशयः–पुरतः सन्निहितमवलोकयतः सपदि भवति प्रत्यक्षं नामजात्यादिकल्पनारहितं निर्विकल्पकमनिर्धारणात्मकम्, इदमिदमेवेति निश्चयस्तु

१ 'नन्वित्यादौ' 'तस्मात् स्थितमेत' दित्यन्ते ग्रन्थे विगलितांशपूरकतया यानि वाक्यान्युल्लिखितानि तानि निबन्धकारवचनतया न विस्रम्भमर्हन्ति। अशुद्धसंवलितानि च। तत् पूर्वापरवाक्यसन्दर्भपर्यालोचनया भावमात्रं प्रकाशितं, पदार्थविवेचने तु न प्रवृत्तम्।

सविकल्पकः प्रत्ययः, तत् जातमात्रे प्रत्यक्षे यत्प्रामाण्यमविसंवादकत्वमर्थप्रापणयोग्यत्वं तदर्थक्रियाप्राप्तिमन्तरेण न विज्ञायते, अथ कथमुच्यते सम्यक् ज्ञानमिति। अवगते हि सम्यक्त्वे प्रवृत्तिर्भवेदिति। परिहरति- **नैष दोष** इति। अयमाशयः-एषः—जातमात्रे प्रत्यक्षे ऽर्थप्रापणयोग्यत्वानवगमः, दोषो न, न हि तस्य तावता नैसर्गिकमर्थक्रियाप्रापणयोग्यत्वमपैति। प्रवृत्तिस्त्वर्थप्राप्तिसंभावनया भवेदेव। इयांस्तु विशेषः—यो मन्दबुद्धिः जातमात्रे जलप्रत्यक्षे न तस्य प्रामाण्यमवधारयितुं शक्नोति; स्नानपानादिक्रियां दूरात् परेषां पश्यन्नवधारयति जलमिति, भवति चार्थप्रापणयोग्यत्वग्रहः। अमन्दबुद्धिस्तु प्रकाशवशेन इदमिदमेवेति सपद्यवधारयति अवधारयति च सपदि प्रामाण्यमिति।

2.15 शङ्कते-**ननु यद्यपीति**। अयमाशयः-यद्यपि चाक्षुषं प्रत्यक्षं स्वगोचरमर्थमर्थक्रियासमर्थं प्रापयतीत्यर्थक्रियाप्रापणलक्षणमविसंवादित्वं तस्यास्ति। श्रावणे तु प्रत्यक्षे न तद् घटते, श्रोत्रेणावभास्यते शब्दः केवलम्, यदा कश्चित् कस्मैचित् किमप्युपदिशति तदा तद्वचनमवधार्यते केवलम्, चक्षुषा प्रकाशित इवार्थे नार्थक्रियास्थितिः काऽपीति। परिहरति-**नेति**। अयमभिप्रायः-अर्थस्वभावनिर्धारणमेवाविसंवादित्वं सैव क्वचिदर्थक्रियास्थितिः। चन्द्रसूर्यमेघचित्रादीनवलोकयतो भवति चन्द्राद्यवभासः, न तत्र जलादिषु दृष्टेषु स्नानपानादिक्रियेव काऽप्यर्थक्रियास्थितिः. 'ज्ञेयस्वरूपविद्यैव तत्रेष्टक्रिया स्थिता।' तथैव शब्दाकर्णनमात्रेण भवत्यवभास्यार्थावधारणम्, तत् चाक्षुषज्ञानस्येव श्रावणज्ञानस्यापि अवभास्यार्थावधारणलक्षणं प्रामाण्यं समानमेवेति।

'ज्ञानानां प्रामाण्यं स्वत एव गृह्यते' इति मीमांसकमतं निरस्यन्नाह-**अत एवेति**। यतो मन्दबुद्धेर्जातमात्रे प्रत्यक्षे अनिर्धारितविशेषस्यार्थक्रियासिद्ध्यनन्तरं प्रामाण्यावधारणं, अमन्दबुद्धेस्तु जातमात्रे प्रत्यक्षे निर्धारितविशेषस्य प्रथमत एव प्रामाण्यग्रहः, अत एवेत्यर्थः। **प्रत्यक्षस्येति**। **कस्यचित्त्विति**। मन्दबुद्धेरिति यावत्। परतः- अर्थक्रियादिना लिङ्गेनेत्यर्थः। **योगिज्ञानस्येति**। योगबलाज्जायमानं प्रत्यक्षं हि विशदावभासरूपमेवेति तस्य प्रामाण्यं स्वत एव गृह्यते। **स्वसंवेद्यज्ञानस्य** चेति। सुखादिप्रत्यक्षस्येति यावत्। न हि सुखे साक्षात्क्रियमाणे तस्मिन् संशयः। **अनुमानस्य तु निश्चयात्मकत्वादिति**। निर्धारितविशेषत्वादिति यावत्। एतेन ज्ञानस्य प्रामाण्यं स्वत एव गम्यत इति नियमो नास्माकमित्युक्तं भवति। उक्तं च शान्तरक्षितेन—

'येनैकैः स्वत एवेति प्राच्यैर्नियम उच्यते।
किञ्चित्स्वतोऽन्यतः किञ्चित् परैश्चानियमो मतः'। इति

व्याख्यातं च कमलशीलेन 'एकैः—मीमांसकैः, परैः—बौद्धैः, तैः किञ्चित् स्वतः प्रमाणमिष्टम् यथा-स्वसंवेदनं योगिज्ञानम् अर्थक्रियाज्ञानम् अनुमानम् अभ्यासवच्च प्रत्यक्षम्। तद्धि स्वत एव निश्चीयते, अभ्यासबलेनापहस्तितभ्रान्तिकारणत्वात्। किञ्चिदन्यतः—विवादास्पदीभूतं चोदनाजनितं ज्ञानं, प्रत्यक्षं चानपगतभ्रान्तिनिमित्तम्' इति। (तत्त्वसं. प. ७७९)

3.9 प्रमाणलक्षणे अपूर्वगोचरत्वनिवेशस्य फलमाह—**प्रथमत** एवेत्यादिना। अयमाशयः—प्रमाणस्य हि प्रयोजनं प्रेक्षावतामर्थक्रियासु प्रवर्त्तनम्, प्रवर्त्तकता चार्थप्रदर्शकतया,

अर्थप्रदर्शकता च यद्यपि प्रथमोत्पन्नज्ञानस्येव धारावाहिनि द्वितीयादिज्ञानेऽप्यविशिष्टा, अथापि प्रथमोत्पन्नज्ञानेनैवार्थः परिच्छिन्नः, अतो द्वितीयादिज्ञानमनपेक्ष्यैव तत एव प्रवर्त्तते पुरुष इति द्वितीयादिज्ञानमन्यथासिद्धं प्रवृत्तावनङ्गमिति न तस्य प्रामाण्यम्। अतस्तद्व्यावृत्तयेऽपूर्वगोचरमिति प्रमाणलक्षणे विशेषणमिति। उक्तं च धर्मोत्तराचार्येण– 'अत एवानधिगतविषयं प्रमाणम्, येनैव हि ज्ञानेन प्रथममधिगतोऽर्थस्तेनैव प्रवर्त्तितः पुरुषः, प्रापितश्चार्थः। तत्रैवार्थे किमन्येन ज्ञानेनाधिकं कार्यम्' इति। (न्या. बि. प. ४) व्याख्यातं चैतदन्यत्रास्माभिः–अर्थक्रियासु प्रवर्त्तमाना अनवगततत्तत्समर्थार्थास्तदर्थावगतये तदर्थावभासकं प्रमाणं प्रतीक्षन्ते, न त्वधिगतार्थाः, अकिञ्चित्करं हि तेषां तत्। अथ यत्तथाविधमर्थमवभासयदपनीय तदज्ञानमुपकरोति तस्मै पुंसे तत् तं प्रमातारमपेक्ष्य तस्मिन्नर्थे प्रमाणम् यत्तु न किञ्चिदप्युपकरोति न तदर्थावभासकमपि प्रमाणव्यवहारपदमधिगच्छति। इदमेव तु प्रमाणतः संपाद्यं फलमर्थानवगतिविधूननम्। प्रमाणादर्थावधारणात् पूर्वं या तदर्थानवगतिरज्ञानलक्षणा सा हि विनाश्यते प्रथमेन प्रमाणेन तदर्थावधारणलक्षणेन। अधिगतार्थावभासकस्तु न तत्फलमापाद्यते। अज्ञानस्यैवाभावात्। तत् अकिञ्चित्करतयाऽप्रमाणमुच्यते इति।

3. 14 ननु साक्षात्कारः प्रमा, तत्करणमिन्द्रियं तु प्रमाणं, तत्साधारणं तु प्रमाणलक्षणं वक्तव्यमित्याशङ्कां निरस्यन्नाह–**सम्यक् ज्ञानं प्रमाणमित्युक्त** इति। जडस्येन्द्रियस्य प्रामाण्यमेवानुपपन्नं, प्रमाणस्य ह्येष स्वभावः, यदर्थपरिच्छेदकत्वम्, अर्थपरिच्छेदश्च ज्ञानस्यैव स्वभावः, चक्षुः संयुज्यते केवलमर्थेन सहालोक इव, अर्थपरिच्छेदस्तु ज्ञानेनैव, अतस्तस्य प्रमाणकोटावनन्तर्भावान्न तत्साधारणं लक्षणं कार्यमिति भावः। नन्वेवं सति साक्षात्कार एव प्रमाणमित्युक्तं भवति, तथा सति इयं प्रमा, इदं प्रमाकरणं यत्प्रमाणमुच्यते इत्ययं फलफलिविभागो नोपपद्येतेति चेद् अनुपदं प्रत्यक्षलक्षणनिरूपणावसरे वक्ष्यामः। एतेन प्रमाणस्वरुपे विप्रतिपत्तिर्निरस्ता।

3. 18 अथ संख्यायां विप्रतिपत्तिं निरस्यन्नाह–**तद् द्विविधमिति**। प्रत्यक्षशब्दस्य व्युत्पत्तिमाह–**प्रतिगतमिति**। प्रतिगतमित्येतद्व्याचष्टे–**आश्रित**मिति। इन्द्रियाश्रितत्वं चेन्द्रियसम्बद्धतैव, सम्बन्धश्च तदुत्पत्तिः, तादात्म्यतदुत्पत्तिभ्यां नापरः सम्बन्धः कोऽप्यस्ति वस्तुनः। तदिदमभिप्रेत्याह–**तस्मादुत्पन्नं ज्ञानं प्रत्यक्षमित्यर्थ** इति। ननु रूपादिज्ञाने अक्षाणामिवार्थानामपि हेतुत्वमस्तीति अर्थाश्रितत्वमभिप्रेत्य प्रत्यर्थमिति कुतो न व्यपदेशः। मैवम्। अर्थेन सह सम्बन्धो मनोविज्ञानसाधारणः। अक्षेण त्वसाधारणः इति प्रत्यक्षशब्देनैव व्यपदेशो युज्यते। आह च दिङ्नागः–

'असाधारणहेतुत्वाद् व्यपदेश्यं तदिन्द्रियैः'

इति। ( प्रमाणसमुच्चये. श्लो. ४ ). वृत्तिश्च–' व्याश्रयादुत्पन्नं विज्ञानं, अक्षाश्रयमिति कुतः; विषयाश्रयं न भवति किं? इति चेद् आह–असाधारणेत्यादि। रूपादिविषयास्तत्रान्तरे मनोविज्ञानसाधारणाः, असाधारणाच्च व्यवहारो दृश्यते यथा यवशब्दो यवाङ्कुरे' इति। शङ्कते–**नन्विति**। **मानसादाविति**। आदिशब्दात्

स्वसंवेदनयोगिप्रत्यक्षयोः संग्रहः । परिहरति– **अत्रोच्यत** इति । अयं भावः– अक्षाश्रितत्वं प्रत्यक्षशब्दस्य व्युत्पत्तौ निमित्तं, न तु प्रवृत्तिनिमित्तं, प्रवृत्तिनिमित्तं तु अर्थसाक्षात्कारित्वम्, प्रत्यक्षशब्दस्य व्युत्पत्तिप्रदर्शनमात्रं कृतं प्रतिगतमक्षमित्यनेन । तेन च व्युत्पत्तिनिमित्तेन एकार्थसमवेतं प्रवृत्तिनिमित्तं साक्षात्कारित्वमुपलक्ष्यते । यथा पङ्क[1]जशब्दव्युत्पत्तिनिमित्तेन पङ्कजनिकर्तृत्वेन तदेकार्थसमवेतं पद्मत्वं तथा । उक्तं च धर्मोत्तराचार्येण–' आश्रितत्वं च व्युत्पत्तिनिमित्तं शब्दस्य, न तु प्रवृत्तिनिमित्तम्, अनेन त्वक्षाश्रितत्वेनैकार्थसमवेतमर्थसाक्षात्कारित्वं लक्ष्यते । तदेव शब्दस्य प्रवृत्तौ निमित्तम् । ततश्च यदेव यत्किञ्चिदर्थस्य साक्षात्कारिज्ञानं तत्प्रत्यक्षमुच्यते ' इति ।

3. 24 अनुमानशब्दस्य व्युत्पत्तिनिमित्तमाह-**मीयते** इत्यादिना **पश्चन्मानमनुमानमित्यन्तेन**। अथ प्रवृत्तिनिमित्तमाह-**लिङ्गे**त्यादिना **इतीत्यन्तेन** । **रूढिवशा**दिति । सामान्ये व्युत्पन्नोऽयं शब्दो रूढ्या विशेषं बोधयतीत्येतत् । उक्तं चाचार्यदिङ्नागेन ' अनुमानं लिङ्गादर्थदर्शन ' मिति । ( न्यायप्रवेश. प. ७ )

4.3 मीमांसकः– कुमारिलभट्टः । सामान्यशब्दो विशेषपर्यवसायी ।

4.9 चार्वाकाभिमतं प्रत्यक्षमात्रप्रामाण्यवादं निरस्यति–**तत्रे**त्यादिना । अयमाशयः– परस्याप्रतिपत्तिं विप्रतिपत्तिं वा निवारयन् यथास्वसमयं तत्तल्लक्षणं प्रणयन्नयं परस्याप्रतिपत्तिविप्रतिपत्ती कथमवगच्छति ? परस्य कायवाग्व्यापारैरिति । तथाचाभ्युपगतमजानतापि कार्यात्कारणानुमानम् । तथा परं स्वाभिप्रायं ज्ञापयन्नयं वाक्यं यदा प्रयुङ्क्ते तदा प्रयुज्यमानवाक्यस्य विवक्षायां लिङ्गत्वमजानताऽप्यभ्युपगतमेवेति । उक्तं च शान्तरक्षितेन–

' न प्रमाणमिति प्राहुरनुमानं तु केचन ।
विवक्षामर्पयन्तोऽपि वाग्भिराभिः कुदृष्टयः ॥ इति । ( तत्त्वसं. ४२९ )

4 15 साङ्ख्याद्यभिमतं शब्दप्रामाण्यं निरस्यति–**शाब्दं च ज्ञान**मित्यादिना । **एष्टव्यमिति**। शाब्दं ज्ञानं प्रमाणमिति वदता बाह्यार्थाविसंवादित्वेन प्रामाण्यमङ्गीकर्त्तव्यम्, अविसंवादश्च तदर्थप्रापणयोग्यतया, सा च तदर्थपरिच्छेदकतया, अर्थविशेषपरिच्छित्तौ शब्दविशेषस्य हेतुत्वं च तयोः शब्दार्थयोः सम्बन्धमन्तरेण न संभवति, चक्षुष इव रूपादिपरिच्छेदकत्वं न नैसर्गिकम् । उन्मीलितमात्रे चक्षुषि नीलादिपरिच्छित्तिवत् श्रुतमात्रे शब्दविशेषेऽर्थपरिच्छित्तिः सर्वेषामेव ( अव्युत्पन्नानामपि ) स्यात् । अतः **सम्बन्धः** शब्दार्थयोर्वाच्यः स क इति विकल्प्य दूषयति–**शब्दार्थयोः सम्बन्धो भवन्नि**त्यादिना ।

4. 19 **भिन्नप्रतिभासेऽपी**ति । देशभेदात् कालभेदादर्थभेदाच्च तयोर्नैकः प्रतिभासः, शब्दः श्रोत्रेणार्थश्चक्षुषा, शब्दः श्रूयतेऽन्यस्मिन् देशे, अर्थो दृश्यतेऽन्यत्र, एवं कालभेदः । तस्मादेकधीगोचरत्वाभावान्न शब्दार्थयोस्तादात्म्यमिति भावः । आह च शान्तरक्षितः–

---

**१. मूले पङ्ककवदिति पाठः प्रामादिकः । पङ्कजवदिति तु भाव्यम्.**

भिन्नाक्षग्रहणादिभ्यो नैकात्म्यं न तदुद्भवः ।
व्यभिचारान्न चान्यस्य युज्यतेऽव्यभिचारिता ॥ इति ( तत्त्वसं. ४४० ).

4. 20 अर्थं प्रति शब्दस्य, शब्दं प्रति वाऽर्थस्य हेतुत्वे सति तयोः कार्यकारणभावः सम्बन्धो घटेत, तदुभयमपि नास्तीत्याह–**नापी**त्यादिना ताल्वादिव्यापारादेव तदुत्पत्ते-रित्यन्तेन ।

4. 24 यद्यपि तादात्म्यतदुत्पत्तिभ्यामन्यः सम्बन्धो वस्तुनोनाभिमतः, अथापि पराभ्यु-पगतमनूद्य निरस्यति–**अथे**त्यादिना । प्रदीपघटयोः प्रकाश्यप्रकाशकभावस्य नैसर्गिक-तया प्रदीपः सत्तामात्रेण यथा प्रकाशयत्यर्थं तथा शब्दार्थयोः वाच्यवाचकभावाख्ये सम्बन्धे नैसर्गिके सति श्रुतमात्रः शब्दोऽविशेषेणासङ्केतज्ञानपि बोधयेदर्थमित्याह–**एवं तर्ही**ति । लौकिकोऽपि पुरुषोऽर्थविशेषशब्दविशेषयोः सङ्केतानभिज्ञः कः स्यादित्यत्र
5. 1 पुरुषविशेषं निदर्शयन्नाह–**अभिनवे**ति । यत्र द्वीपेऽग्निशब्दस्य व्यवहार एव न ततो द्वीपा-दागत इति यावत् । ननु यद्यपि शब्दार्थयोरस्ति वाच्यवाचकभावो नैसर्गिकः सम्बन्धः; अथाप्यर्थप्रत्यायनयोग्यता तु सङ्केतसापेक्षा, तदग्रहे नाऽर्थप्रत्यय इत्याशयेनाशङ्कते–अथेति । **योग्य** एवेति । सङ्केतमपेक्ष्यैवार्थप्रत्यायनयोग्यो जायत इति भिन्नक्रमेणान्वयः । निरस्यति–**तत्रे**ति । **न ह्येवमस्य प्रामाण्यमवतिष्ठत** इति । एवं सत्यस्य प्रामाण्यं न ह्यवतिष्ठत इत्यर्थः । कस्मात् ? आह–**सङ्केतस्यैवे**ति । आह च कमलशीलः–‘ न हि प्रकृत्याऽर्थप्रतीतिहेतवो दीपादयः सङ्केतमपेक्षन्ते, अन्यथा सङ्केतस्यैवान्वयव्यतिरेकाभ्या-मर्थप्रतीतौ सामर्थ्यं स्यात् न स्वाभाविकस्य सम्बन्धस्य ’ इति ( तत्त्वसं. प. ४३८ ). **अत** इति । शब्दार्थयोः सम्बन्धाभावादित्यर्थः । **न ज्ञायते** इति । निश्चेतुं न शक्यते इति यावत् । सम्बन्धे सति ह्यनेन शब्देनायमेवार्थो बोध्य इति निर्णयः स्यात् । सम्बन्धाभावादविशेषाद्विवक्षितार्थं एवानेन शब्देन बोध्येतेति निर्णयो नैव भवेदिति
5. 5 भावः । अनुपपद्यमानमपि सम्बन्धं तुष्यत्विति न्यायेनाभ्युपगम्यापि दूषयति–**अस्तु** वेति । अन्य एव–तादात्म्यतदुत्पत्तिभ्यामन्य एव ।

5. 10 नियते वस्तुनः स्वभावे नाक्षेपावसर इत्यभिप्रायेण शङ्कते–**अथ वक्तव्य**मिति । प्रतिक्षिपति–**तदयुक्त**मिति । प्रमाणसिद्ध वस्तुनः स्वभावे नाक्षेपावसरः, कल्प्यमाने तु स्यादेवाशङ्कावसर इति भावः । यथाऽग्निरुत्पद्यमानो निसर्गत एव दाहकशक्तिविशिष्ट एवोत्पद्यते तथा शब्दविशेषोऽर्थविशेषप्रत्यायकशक्तिविशिष्ट एवोत्पद्यते इत्यभिप्रायेण परेण
5. 15 क्रियमाणां शङ्कामनूद्य प्रतिक्षिपति–**नचैवं वक्तव्य**मित्यादिना । **नियतार्थाव्यभिचारित्व**-मिति । नचैवं वक्तव्यमित्यन्वयः । तत्र हेतुमाह–**तथाही**त्यादिना । यच्च परैराप्तोच्चारितं वाक्यं प्रमाणमित्युच्यते तद् दूषयति–**नाप्याप्तप्रणीतशब्दाना**मिति । अनाप्तानुच्चारितं वाक्यं प्रमाणमिति वदतां वेदस्यापौरुषेयत्वेन स्वतः प्रामाण्यं वर्णयतां मीमांसकानां पक्षं
5. 24 दूषयति–**सम्बन्धदूषणेनैवे**ति । शब्दप्रामाण्ये निरस्यमाने लोकव्यवहारमात्रोच्छेदप्रस-ङ्गमाशङ्क्य परिहरति–**कथं तर्ही**त्यादिना । **विवक्षावशा**दिति । प्रयोक्तुरर्थविवक्षाया वचो लिङ्गतया ज्ञापकं भवतीति भावः । आहच शान्तरक्षितः–

वचोभ्यो निखिलेभ्योऽपि विवक्षैषाऽनुमीयते ।
प्रत्यक्षानुपलम्भाभ्यां तद्धेतुः सा हि निश्चिता ॥ इति। (तत्त्वसं. प. ४४१)

सा विवक्षा तद्धेतुः तस्य प्रयुज्यमानस्य वचसो हेतुः, प्रत्यक्षानुपलम्भाभ्यां तयोर्हेतुहेतुमद्भावो निश्चीयत इति तदर्थः ।

अथ नैयायिकाभिमतमुपमानप्रामाण्यं निरस्यन् तत्पक्षमनुवदति–**नैयायिकस्येति । प्रपञ्च**
6. 3 इति । निरूप्यते । इति शेषः । **आप्तातिदेशवाक्यार्थस्मरणसहकारी**ति । अतिदेशवाक्यार्थस्मरणं सहकारि यस्येत्यर्थः । **सारूप्यज्ञान**मिति । आप्तवाक्यजन्यमिति यावत् । **विषयवत्तया व्याप्त**मिति । अपूर्वविषयं प्रकाशयत् प्रमाणं भवति, असति तस्मिन् कथं ज्ञानस्य प्रामाण्यमिति भावः ।

6. 6 विषयासंभवमुपपादयति–**तथाहीति । समाख्यासम्बन्ध** इति । अयमाशयः, अतिदेशवाक्यं श्रुत्वा वनं गतः पिण्डविशेषं यदा पश्यति तदाऽस्य पिण्डापरोक्षमात्रम् । सारूप्यं तु स्मर्यते केवलम् । स्मृतिस्तु न प्रमाणं गृहीतग्राहित्वात् । ननु पिण्डदर्शनसमनन्तरमयं गवयपदवाच्य इति भवति समाख्यासंबन्धग्रहः, इयमेवोपमा उपमानफलमुच्यते, अतोऽस्ति विषयो यः शब्दार्थयोः सम्बन्धः समाख्येति । निरस्यति–**सच परमार्थतो नास्तीति ।** यश्चायं सम्बन्ध इति प्रवादः, स वाङ्मात्रम् । न सम्बन्धिभ्यां भिन्नः कश्चिदर्थ उपलभ्यते । यः सम्बन्ध इत्यर्थतत्त्वमिष्येतेति भावः । सम्बन्धमात्रं विकल्प्य दूषयति-**दृश्यत्व** इत्यादिना । इमौ सम्बन्धिनौ अनयोश्चायं सम्बन्ध इति वदता वक्तव्यं किमसौ सम्बन्धो दृश्य उतादृश्यः । अदृश्यस्य सत्ता न सिद्ध्यति, यदि दृश्यः, सम्बन्धी यदा दृश्यते तदा दृश्येत सोऽपि, न च दृश्यते, तस्मात् सम्बन्धो न पारमार्थिक इति शब्दार्थयोः समाख्या सम्बन्धस्तत्प्रकाशकतयोपमायाः प्रामाण्यमित्येतन्नैव घटत इतिभावः ।

6. 8 ननु यत्र सम्बन्ध्युपलम्भसामग्र्येव सम्बन्धोपलम्भसामग्री, तत्र सम्बन्धिदर्शनकाल एव सम्बन्धोऽप्युपलभ्येत । यत्र तु भिन्ना तत्र न तदैव तदुपलभ्येत, न ततः सर्वथा तस्यादृश्यत्वम्, इत्यतो दूषणान्तरमाह–**किञ्चेति । अथ सम्बद्धबुद्धिजनकत्वं सम्बन्ध** इति । अयमाशयः–ननु सम्बन्धिभ्यामन्य एव सम्बन्धः, स हि सम्बद्धबुद्धिहेतुत्वलक्षणः । न हि घटपटयोः सत्तामात्रं घटपटौ संयुक्ताविति बुद्धौ हेतुः, विश्लिष्टावस्थायामपि तथा प्रतीत्यापातात् , अतः संयोगो नाम ताभ्यामन्यो वैशिष्ट्यप्रतीतिनियामकः स्वीकार्यः, तथैव गवयशब्दपिण्डविशेषयोः सतोरपि न समाख्याप्रतिपत्तिः , यं समाख्यासम्बन्धमाप्तातिदेशवाक्यार्थज्ञानपिण्डविशेषदर्शनसमनन्तरं प्र तिपद्यत इति । प्रतिक्षिपति–**तन्न युक्तमिति । सम्बद्धवस्तुद्वयादपी**ति । सम्बन्धाख्यवस्त्वन्तरनिरपेक्षाद् वस्तुद्वयादेवेत्यर्थः । अयमाशयः–सर्वेषामेव सतां क्षणिकत्वेन संयुक्तप्रतीतिगोचरयोर्विश्लिष्टप्रतीतिगोचराभ्यां भिन्नत्वेन तयोरेव च सम्बद्धप्रत्ययहेतुत्वेन ताभ्यामतिरिक्तस्य सम्बद्धस्यानपेक्षणाद् विशिष्टबुद्धिः सम्बन्धमतिरिक्तं कल्पयितुं न प्रभवतीति । इदमत्र बोध्यम्–यो गोसदृशः स गवय इति तु श्रावणं प्रत्यक्षम् । तत्तु शब्दविशेषप्रकाशकतया शब्दमात्रे प्रमाणम् , पिण्डविशेषदर्शनं तु तदनन्तरभावि पिण्डविशेषप्रकाशकतया तन्मात्रे

प्रमाणम् । उपदेशावगतसारूप्यस्मरणं यद् भवति पिण्डविशेषदर्शनेन, तत् स्मृतिरूपतया गृहीतग्रहीततया न प्रमाणम्, दृष्टे पिण्डविशेषे ततः पश्चाद् यश्च समाख्यासम्बन्धग्रहः सोऽपि गवयसामान्ये बौद्ध एव वस्तुनीति स्मृतितो न बहिर्भवति । अपि च समाख्यासम्बन्धग्रहोपायाश्चान्येऽपि सन्ति यथा—कः पिक इति पृष्टे कश्चिदाह, यो मधुरं रौति स पिक इति, मधुररुतश्रवणानन्तरं पिकसमाख्याग्रहो बौद्धे पिकसामान्याकारे भवति, एवमादेरपि पृथक् प्राभाण्यमापतेदिति । उक्तं च शान्तरक्षितेन—

‘ उच्यते क्षणिकत्वेन नाविशेषा जलादयः ’ । (तत्त्वसं. प. २२०)

तथा—

‘ न सम्बन्ध्यतिरिक्तश्च सम्बन्धोऽस्तीति साधितम् ।
प्रागेव समये शब्दो गृहीतः श्रोत्रचेतसा ॥

चक्षुषा दृश्यते चासावग्रतोऽवस्थितः पशुः ।
पृथग्विज्ञातयोरेषा युक्ता न घटना प्रमा ॥

ग्रहीतप्रतिसन्धानात्सुगन्धिमधुरत्ववत् ।
तन्नाम योगसंवित्तिः स्मार्ततां नातिवर्तते ॥

अनन्तोपायजन्याश्च समाख्यायोगसंविदः ।
साधर्म्यमनपेक्ष्यापि जायन्ते नरपादिषु ॥

सितातपत्रापिहितब्रध्नपादो नराधिपः ।
तेषां मध्य इति प्रोक्त उपदेशविशेषतः ॥

कालान्तरेण तदृष्टौ तन्नामास्येति या मतिः ’ ।
सा तदान्या प्रमा प्राप्ता साधर्म्याद्यनपेक्षणात् ॥ इति ॥ (तत्त्वसं. प. ४५४)

6. 15 अथ मीमांसकानामुपमानप्रामाण्योपपादनं निरस्यति—**एवमित्यादिना** । **मीमांसकोपवर्णितस्यापीति** । उपमानस्येति शेषः । **सादृश्यविशिष्टः पिण्डः पिण्डविशिष्टं वा सादृश्यमुपमानविषयस्तेन वर्ण्यते** इति । अयमाशयः—पूर्वं ग्रामे गां दृष्ट्वा पश्चात् जातु वनं गतो गवयं पश्यति, तदा तस्य भवति सपदि पिण्डविशेषप्रत्यक्षमालोचनात्मकं ज्ञानं, ततश्च गोसदृशोऽयं पशुरिति विशेषतो विनिश्चयः सविकल्पकः । अयं चेन्द्रियजन्यत्वेनाध्यक्षलक्षण एव । ततश्च भवति ‘ अनेन पशुना सदृशो गौ’रिति ज्ञानम् । इदमेव ज्ञानमुपमानं प्रमाणमुच्यते, अस्य च विषयो गवयसादृश्यविशिष्टो गौः गोनिष्ठं वा सादृश्यम् । ननु सादृश्यं प्रत्यक्षेणावगतं, गौश्च स्मृतेर्विषयः । अथ किमपूर्वमुपमानप्रमाणविषयतयोच्यते । सत्यम् । सादृश्यविशिष्टतात्त्वनधिगता सोपमानस्य विषयः । तथाचोक्तं कुमारिलेन—

तस्माद् यत् स्मर्यते तत् स्यात् सादृश्येन विशेषितम् ।
प्रमेयमुपमानस्य सादृश्यं वा विशेषितम् ॥

प्रत्यक्षेणावरुद्धे च सादृश्ये च गवि स्मृते ।
विशिष्टस्यान्यतोऽसिद्धेरुपमायाः प्रमाणता ॥ इति । (श्लोकवा. प. ४४४)

उपमानप्रमाणविषयतया पराभिमतं सादृश्यं निरस्यति–**नचे**त्यादिना । यौ मिथः सदृशौ गोगवयश्च तौ प्रत्यक्षसिद्धौ, एको दृष्टपूर्वः अपरश्चाधुना । अथाभ्यामुभाभ्यामतिरिक्तं किं सादृश्यमस्ति, यदुपमानस्य विषय उच्येत । भूयोऽवयवसाम्यमिति यत्, तदवयवसन्निवेशतो नातिरिच्यते । स च दृष्ट एव, तद् दृष्टाभ्यां पिण्डाभ्यामन्यत् सादृश्यं नाम न प्रमाणगोचरमिति यावत् । प्रमाणासिद्धतामेवोपपादयति–**तथाही**त्यादिना । **दृश्यानुपलम्भग्रस्तमेव** तदिति । उपलम्भयोग्यस्यानुपलम्भो ह्यसत्तामेव वस्तुनो गमयति । **सादृश्यप्रत्ययस्त्विति** । अयमाशयः–नन्वयमनेन सदृश इति येयं प्रतीतिः सैव सादृश्ये लिङ्गम्, विषयजन्यत्वात् प्रतीतेः । तस्मात् कार्यलिङ्गकानुमानेन तत्सिद्धिरिति चेन्न । यौ सदृशतया प्रतीयमानौ गोगवयौ, तौ स्वहेतोरुत्पन्नौ तावेवायमनेन सदृशाविति प्रत्यये हेतू, इति न ततोऽतिरिक्तं सादृश्यं वस्तु सिद्ध्यति । भूयोऽवयवसारूप्यमवयवसन्निवेशविशेषान्नातिरिक्तमिति न कार्यलिङ्गकानुमानात्तत्सिद्धिरिति । **तेन वादिने**ति । मीमांसकेनेत्यर्थः । स्वयमेव प्रमाणान्तरसिद्धयोः सादृश्यपिण्डयोर्विशेष्यविशेषणभावमात्रस्योपमानप्रमाणविषयतां ब्रुवन् सादृश्यं केन प्रमाणेन सिद्ध्यतीति पृष्टे अनेनैवोपमानप्रमाणेनेति कथं ब्रूयात्, व्याहतं हि वच इति भावः । इदमत्र बोध्यम्–गोसदृशे गवये दृष्टे अनुभूतपूर्वे गवि एतत्सदृशो गौरितिवत् एतद्विसदृशस्तुरग इति भवत्यनुभूतपूर्वे तुरगे, तदस्या वैसादृश्यप्रतीतेरपि प्रमाणान्तरता किं न स्यात् । न चाभावप्रमाणेऽन्तर्भावः, भावावलम्बिनी ह्येषा प्रतीतिः । एवं तरुश्रेण्यां दृश्यमानायां प्रथमतरुदर्शनेऽनधिगतमाद्यत्वं द्वितीयतरुदर्शनान्तरं दृष्टपूर्वे तरावाद्यत्वमधिगम्यते 'स तरुराद्य' इति । तदस्या अपि प्रतीतेः प्रमाणान्तरत्वमापतेदपूर्वविषयत्वादिति । उक्तं च शान्तरक्षितेन–

'गवयस्योपलम्भे तु तुरङ्गादौ प्रवर्तते ।
तद्वैसादृश्यविज्ञानं यत् तदन्या प्रमा न किम् ॥

अभावान्तर्गतं नो चेन्नैवं भावावलम्बनात् ।
अन्योन्याभावतायां च समं सादृश्यबुद्धिषु ॥

तरुपङ्क्त्यादिसंदृष्टावेकपादपदर्शनात् ।
द्वितीयशाखिविज्ञानादाद्योऽसाविति निश्चयः ॥

प्रमाणान्तरमासक्तं सादृश्यादनपेक्षणात् ॥' ( तत्त्वसं. प. ४९० )

6. 26 इति । **पृथङ्नोपपद्येत** इति । अनुमानात् पृथगित्यर्थः । अर्थापत्तेः प्रामाण्यमेव न, यदि प्रामाण्यं तदाऽनुमान एवान्तर्भाव इति यावत् । तदिदमुपपादयन्नाह–**अत्रेदं चिन्त्यत** इति । **योऽसौ प्रमाणदृष्टोऽर्थ** इति । प्रमाणदृष्टोऽर्थः–दिवाऽभुञ्जानस्य पीनत्वं जीवतो गृहेऽभाव इत्यादिः । परिकल्प्यमानोऽर्थः–रात्रिभोजनं बहिर्भाव इत्यादिः ।

**प्रतिबन्धोऽस्तीति** । यः कल्पकः प्रमाणदृष्टः, यश्च परिकल्प्यः परोक्षस्तयोः सति प्रतिबन्धेऽनुमानेऽन्तर्भावः, असति च तस्य तस्मिन्नर्थे प्रामाण्यमेव न, । यथा दिवाऽभुञ्जानस्य यत् पीनत्वं तस्य च रात्रिभोजनस्य च कार्यकारणभावः प्रतिबन्धोऽस्तीति रात्रिभोजने कारणे पीनत्वं कार्यं लिङ्गं भवितुमर्हतीत्यनुमानान्न पृथगर्थापत्तेस्तत्र प्रामाण्यम् । यत्तु मीमांसकः प्राह–दिवाऽभुञ्जानस्य पीनत्वश्रवणाद् रात्रौ भुङ्क्ते इति वाक्यं परिकल्प्यते इति । तदेतदसम्बन्धान्नोपपद्यते इति न तत्र प्रमाणं किमपि । उक्तं च शान्तरक्षितेन–

'क्षपाभोजनसम्बन्धी पुमानिष्टः प्रतीयते ।
दिवाभोजनवैकल्पपीनत्वेन तदन्यवत् ॥

भोजने सति पीनत्वमन्वयव्यतिरेकतः ।
निश्चितं तेन सम्बन्धाद् वस्तुनो वस्तुतो गतिः ॥

सर्वसम्बन्धशून्यं हि कथं वाक्यं प्रतीयते ।
एकस्माद् वाक्यतः सर्वं प्रतीयेतान्यथा पुनः' ॥ ( तत्त्वसं. प. ४६९ )

7-3 इति । अथाभावाख्यं प्रमाणं निरस्यति–**अभावस्ये**त्यादिना । **स्वरूपमेव न वीक्षामहे** इति । अवस्तुत्वादिति शेषः । **प्रत्यक्षादीना**मिति । आदिशब्दादनुमानोपमानशब्दार्थापत्तयो गृह्यन्ते । **मीमांसकैरभिधीयते** इति । आह च शबरस्वामी–' अभावोऽपि प्रमाणाभावः नास्तीत्यर्थस्यासन्निकृष्टस्य ' इति । कुमारिलश्च–

' प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुबोधावबोधार्थं तत्राभावप्रमाणता ' ॥ ( श्लोक. वा. प. ४७३ )

7-5 इति । अभावप्रमाणतयाभिमतां प्रमाणपञ्चकानुत्पत्तिं विकल्प्य दूषयति-**तत्र केय**मित्यादिना । **सर्वशक्तिशून्यत्वा**दिति । उत्पत्तिप्रतिषेधमात्रस्याभावरूपतया तस्यावस्तुत्वादित्यर्थः । **अत एवेति** । अवस्तुत्वादेवेत्यर्थः । **न ह्यभावः कस्यचित् प्रतिपत्ति**रिति । कस्यचिद् विषयस्य प्रतिपत्तिरित्यर्थः । **तस्यापि कथं प्रतिपत्ति**रिति । अभावस्यावस्तुतया तस्य प्रतिपत्तिर्वा कथं भवेदित्यर्थः । ननु प्रमाणानुत्पत्तिः प्रमातुरात्मनोऽवस्थाविशेष एव । आह च कुमारिलः–

' प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव इष्यते ।
साऽऽत्मनोऽपरिणामो वा ' ( श्लोक वा. प. ४७९ )

इति । सा प्रत्यक्षादेरनुत्पत्तिः, आत्मनोऽपरिणामो–निषेध्याभिमतघटादिज्ञानरूपेणापरिणामित्वम्, साम्यावस्थमात्मद्रव्यमिति तदर्थः । इत्थं च तस्य नावस्तुत्वमिति चेत्, किं तेन सुषुप्त्यवस्थासाधारणेन । तथा चोक्तं शान्तरक्षितेन–

' अस्तु वाऽपरिणामोऽस्य तथापि व्यभिचारिता ।
स्वापमूर्च्छाद्यवस्थासु तद्भावेऽप्यर्थसंभवात् ' ॥ ( तत्त्वसं. प. ४७४ )

इति । ननु पर्युदासवृत्त्या ब्रूमः—प्रत्यक्षादीनामनुत्पत्तिरिति । सा च ज्ञानान्तरावस्थितिः । उक्तं च कुमारिलेन—' विज्ञानं वाऽन्यवस्तुनि ' इति, इति चेन्निरस्यते चैतन्नापीत्यादिना द्वितीयविकल्पनिरसनेन ।

7-14 प्रत्यक्षाद्यनुत्पत्तिरित्यत्र किं ज्ञानमात्रं विवक्षितमुत ज्ञानविशेष इति विकल्पमभिप्रेत्य ज्ञानसामान्यपक्षं निरस्यति—**देशकाले**त्यादिना । देशविप्रकृष्टः सुमेरुः, कालविप्रकृष्टः शङ्खचक्रवर्ती, स्वभावविप्रकृष्टः पिशाचादिः । ज्ञानविशेषपक्षं दूषयति-**अथैकज्ञानसंसर्गीति** । एकस्मिन् ज्ञाने घटविशिष्टप्रत्यक्षे यद्विषयतया सम्बद्धं भूतलं—भूतलमात्रं तस्य वस्तुनः प्रत्यक्षमेव प्रत्यक्षाद्यनुत्पत्तिरित्यनेनोच्यते इति यावत् । एकविषयकत्वमभिप्रेत्यैकज्ञानमित्युक्तिः । यत्प्रदेशविषयकं विशिष्टप्रत्यक्षं तत्प्रदेशविशेषविषयकमेव भूतलमात्रप्रत्यक्षमपीति तदिदं प्रत्यक्षमभावप्रमाणमुच्यते इति भावः । अत्राह-**तदे**ति ।

7·18 प्रत्यक्षं लक्षयति—**तत्र प्रत्यक्ष**मिति । तत्र—प्रत्यक्षानुमानयोर्मध्ये । यत्कल्पनापोढमभ्रान्तं तत्प्रत्यक्षमित्युद्देश्यविधेयभावेनान्वयः । कल्पनापोढमभ्रान्तमिति प्रतिषेधादर्थतो ज्ञानमिति सिद्धम् । ननु विधीयमानं प्रत्यक्षत्वमुद्देश्याकारतो भिन्नं वक्तव्यम् । उच्यते- यत् साक्षात्कारिज्ञानत्वमुभयवादिसंप्रतिपन्नंतत् प्रत्यक्षशब्दवाच्यम् । का नाम कल्पना, यदपोढं प्रत्यक्षमुच्यते तामाह-**पूर्वापर**मित्यादिना । **शब्दसंयुक्ताकारे**ति । संयोगश्च नामतो यथा—डित्थ इति, जातितो यथा—गौरिति, गुणतो यथा—शुक्ल इति, क्रियातो यथा—पाचक इति, द्रव्यतो यथा--दण्डीति विविधो बोध्यः । उक्तं च दिङ्नागेन ' **नामजात्यादियोजने**'ति । व्याख्यातं चैतद्वृत्तौ—' अथ कल्पना कीदृशीत्याह—नामजात्यादियोजना, यदृच्छाशब्देषु नाम्ना डित्थ इति जातिशब्देषु यथा गौरिती ' त्यादिना (प्रमाण. १२) । बालमूकादीनां शब्दसंस्पर्शयोग्या प्रतीतिर्नास्तीत्यत आह-**अन्तर्जल्पाकारा** चेति । आप्तसंवादं प्रमाणयति **तथाचोक्त**मिति । धर्मकीर्त्तिनेति यावत् । अभिलापसंसर्गयोग्यः प्रतिभासो यस्यां प्रतीतौ सा अभिलापसंसर्गयोग्यप्रतिभासा । योग्यत्वनिवेशाद् बालमूकादीनां या कल्पनाऽन्तर्जल्पाकारा तस्याः संग्रहः । व्याख्यातं चैतद् धर्मोत्तराचार्येण--'अभिलप्यतेऽनेनेत्यभिलापो वाचकः शब्दः, अभिलापेन संसर्ग एकस्मिन् ज्ञाने अभिधेयाकारस्याभिधानाकारेण सह ग्राह्याकारतया शीलनम्, ततो यदेकस्मिन् ज्ञाने यदभिधेयाभिधाकारौ संनिविष्टौ भवतः तदा संसृष्टेऽभिधानाभिधेये भवतः । अभिलापसंसर्गाय योग्योऽभिधेयावभासो यस्यां प्रतीतौ सा तथोक्ते ' ति । ( न्यायबिन्दुटीका--प. १० ) बालमूकादीनामप्यन्तर्जल्पाकारं ज्ञानमस्तीत्येतत् समर्थयति-**विकल्पार्थस्ये**त्यादिना । आह च शान्तरक्षितः—

'शब्दार्थघटनायोग्या वृक्ष इत्यादिरूपतः ।
या वाचामप्रयोगेऽपि साभिलापेव जायते ॥

अतीतभवनामार्थभावनावासनान्वयात् ।
सद्यो जातोऽपि यद्योगादितिकर्त्तव्यतापटुः ' ॥ ( तत्त्वसं. प. ३६७ )

इति । सेयं कल्पना स्मितरुदितस्तनपानादिव्यापारविशेषैर्बालेष्वप्यस्तीति निश्चीयते ।

7-24 ननु कस्माच्चिद् गौरेवायमित्यवधारणात् सविकल्पकाद् भवत्यर्थप्राप्तिः, तथा चलद्वृक्षदर्शनेन पीतशङ्खदर्शनेन वा भ्रमेण प्रवृत्तस्याप्यर्थप्राप्तिर्दृष्टा, तत्तयोः प्रामाण्यं नेति कथमवधारितमित्याशयेन शङ्कते–**किं पुनरि**ति । **न प्रमाण**मिति । न प्रमाणमित्यत्रेत्यर्थः । न प्रत्यक्षप्रमाणमित्यत्र किं प्रमाणमिति यावत् । **सर्वेषां सम्मत**मिति । प्रत्यक्षस्य लक्षणे तु विप्रतिपत्तिर्वादिनां, प्रत्यक्षस्वरूपस्य तु अर्थसाक्षात्कारात्मकत्वे न विप्रतिपत्तिरित्याशयः । कल्पनाज्ञानस्य भ्रमस्य च तथात्वं नेत्याह–**नचे**त्यादिना । अर्थं साक्षात्कर्तुं यत् क्षमते ज्ञानं तदर्थसाक्षात्कारीति युक्तम्, यत्तु न क्षमते तस्य कथमर्थसाक्षात्कारिज्ञानात्मता, कल्पनाज्ञानस्य भ्रमस्य च न तत्क्षमतेत्याह–**नच कल्पनाविभ्रमा**विति । असामर्थ्यमुपपादयति–**तथाहीत्या**दिना । **ग्राह्यतां विदुः** । **हेतुत्वमेवेति** । युक्तिज्ञा हेतुत्वमेव ग्राह्यतां विदुरित्यन्वयः । हेतुत्वमुपपादयति–ज्ञानाकारार्पणक्षममिति । यस्माद् ग्राह्यं वस्तु ज्ञाने स्वाकारार्पणक्षमं भवतीत्यर्थः । **कल्पनाज्ञानं त्विति** । यदिदं नामजात्यादिकल्पनायुक्तं ज्ञानं तद् विनैव नीलादिस्वलक्षणमर्थं वासनामात्रेण जायते इति न तस्यार्थकार्यता, यस्मान्नार्थकार्यं तत् तस्मान्नार्थग्राहिता तस्येति कथं तदर्थसाक्षात्कारि भवितुमर्हतीति भावः । कल्पनाज्ञानस्यार्थजन्यत्वेऽनिष्टमापादयति–**ततश्चेति** । नामजात्याद्यभिलापिनी कल्पनाप्रतीतिर्नीलादिशब्दं शृण्वतोऽन्धस्यापि भवत्येवेति कल्पनाया अप्यर्थजन्यत्वाभ्युपगमे तस्यापि रूपदर्शित्वमापतेत् । हेतुहेतुमद्भावान्नान्यो ग्राह्यग्राहकभाव इति चोक्तमेवेति भावः ।

8-6 अत्राप्तसंवादं प्रमाणयति–**अत एवोक्त**मिति । प्रत्यक्ष इव प्रतिभासाभावादित्यर्थः । वैयाकरणमतमनूद्य निरस्यति–**एतेने**त्यादिना । एतेन–वक्ष्यमाणदूषणेनेत्यर्थः ।

8-11 **तथाहीति** । अयमाशयः--पुरःस्थितं पश्यतः पुरुषस्य भवतु नामायं घट इति नामानुविद्धप्रत्ययः, तेनैवं यदा घटोऽनुभूयते तदाऽऽश्रयीभूतं भूतलं नयनगोचरीभूतमनुभूयत एव, न च तन्नाम्नोच्चार्यते, तन्नोपपद्यते सर्व एव प्रत्ययो नामानुविद्ध इति । अभ्युपगम्येदं दूषणमुक्तम् । वस्तुतो विकल्परहित एव साक्षात्कारः, उन्मीलितमात्रे नयने पुरःस्थितं स्वलक्षणं वस्तु साक्षात्क्रियत एव, अनन्तरमेव तु विकल्पावभासः, स च निमील्य नयने विचारयतोऽपि भवत्येव, न चात्राक्षार्थापेक्षा । भ्रमस्य प्रत्यक्षत्वासंभवमुपपादयति–**भ्रान्तमपी**त्यादिना । अर्थक्रियाक्षमे वस्तुनि यद्विपर्यस्तमुत्पद्यते तदेव भ्रान्तमुच्यते भ्रान्तिस्वरूपविद्भिरित्यर्थः । विपर्यस्तावभासकस्य ज्ञानस्य यथावस्थितवस्तुग्राहकत्वाभावेन न प्रत्यक्षत्वमिति भावः ।

8-16 **अत एवाहाचार्य** इति । आचार्यः धर्मकीर्त्तिः, आह--न्यायबिन्दाविति यावत् । तिमिरशब्दो नायनदोषोपलक्षकः । एतेन--तिमिरदोषाहितत्वेन ।

8-20 आशङ्कते–**ननु यदी**ति । अयमाशयः--यदि गच्छद्वृक्षपीतशङ्खादिदर्शनं भ्रान्तमिति न तत् प्रत्यक्षम्, प्रमाणमविसंवादि ज्ञानमित्येतत् प्रमाणलक्षणं नोपपद्यते । तत्रातिप्रसङ्गात् । तदपि ह्यर्थक्रियाकार्यर्थप्रापकम्, चलद्वृक्षदर्शनेन प्रवृत्तो वृक्षं तद्देशं वा प्राप्नोति । पीतशङ्खावभासेन प्रवृत्तः शङ्खम् । अतः प्रमाणलक्षणाक्रान्ततया प्रमाणविशे-

घेऽन्तर्भावोऽस्यावश्यं वक्तव्यः। प्रत्यक्षानुमानाभ्यां च नान्यत् प्रमाणम्, नचेदमनुमानम् तत् प्रत्यक्ष एवान्तर्भावो वाच्यः। तदभ्रान्तत्वं विशेषणं प्रत्यक्षलक्षणे न योज्यमिति।

परिहरति–**न ततो वस्तुप्राप्तिः, किं तर्हि, ज्ञानान्तरादेवेति**। ततः-चलद्वृक्षादिदर्शनाद् अवभासितस्य वस्तुनो न प्राप्तिः किंतर्हि, अन्यस्यैव, यदेव ज्ञानान्तरादवभास्यम्। अर्थक्रियासमर्थमेव वस्तुशब्दवाच्यम्, चलद्वृक्षादि नार्थक्रियासमर्थम्, नियतदेशवृक्षाद्येव त्वर्थक्रियासमर्थम्, ज्ञानान्तरादेव तु तदवभास्यमित्यर्थः। अयमाशयः--चलद्वृक्षदर्शनं नाविसंवादि, न प्राप्यते हि तेन यथावभासं वस्तु, ज्ञानान्तरावभास्यो वृक्षो नियतदेशः प्राप्यते, देशश्चाचलद्वृक्षः। तथा पीतशङ्खावभासो नाविसंवादी, पीतं तु दृष्टं, प्राप्यते शुक्लम्, पीतादन्यदेव तु शुक्लम्, तन्न स्वेनावभासितमर्थं प्रापयति। यथावभासमर्थं प्रापयदेव त्वविसंवादि। ननु प्राप्यते शङ्खः स एव, यः पीत इत्यवभासपथमुपगतः। न। रूपादनन्य एव तु शङ्खः, न रूपरूपिणोर्भेदः। उक्तं च शान्तरक्षितेन—

‘न वर्णव्यतिरिक्तं च संस्थानमुपजायते।
भासमानस्य वर्णस्य न च संवाद इष्यते’। (तत्त्वसं. प. ३९९)

इति। एतेन सन्तानैक्यादविसंवादकत्वोपपादनमपि निरस्तं वेदितव्यम्। आह च कमलशीलः–‘प्रमाणं भवद् द्वाभ्यामाकाराभ्यां भवति। यथाप्रतिभासमविसंवादात्, यथाध्यवसायं वा। तत्रेह न यथाप्रतिभासमविसंवादः, पीतस्य प्रतिभासनात्, तस्य यथाभूतस्याप्राप्तेः। नापि यथाध्यवसायमविसंवादः, पीतस्यैव विशिष्टार्थक्रियाकारित्वेनाध्यवसायात्, न च तद्रूपार्थक्रियाप्राप्तिरस्ति’ इति (तत्त्वसं. पं. ३९९) आह च धर्मोत्तराचार्यः–‘यदि मिथ्याज्ञानं कथं ततो वृक्षावाप्तिरिचेत्, न ततो वृक्षावाप्तिः, नानादेशगामी वृक्षस्तेन परिच्छिन्नः, एकदेशनियतश्च वृक्षोऽवाप्यते। ततो यद्देशो गच्छद्वृक्षो दृष्टस्तद्देशो नावाप्यते, यद्देशश्चावाप्यते स न दृष्ट इति’ इति। तथाच यथावभासं वस्तुप्रापकत्वस्यैव प्रमाणलक्षणत्वेन नातिव्याप्तिरिति। इदमभिहितं भवति--अवभास्यमानश्चलद्वृक्षादिरर्थक्रियासमर्थाज्ज्ञानान्तरावभास्यान्नियतदेशवृक्षादन्य एवेत्यर्थक्रियासमर्थार्थावभासकत्वस्य तथाविधाध्यवसायहेतुत्वस्य वाऽभावेन न चलद्वृक्षादिदर्शनस्य प्रामाण्यम्, तस्यैवाविसंवादकत्वरूपत्वादिति। अनुमानेऽतिप्रसङ्गवारणाय कल्पनापोढमिति। अनुमानस्य सामान्यमेव विषय इति न तत्कल्पनापोढम्।

ननु--कल्पनापोढमेव चेत् प्रत्यक्षप्रमाणं तस्य कथं व्यवहाराङ्गता। न ह्यनिर्देश्यमवभासयत् प्रवृत्तये निवृत्तये वा प्रभवति। सत्यम्। कल्पनाविरहितमनिर्देश्यमवभासयदपि प्रवृत्त्याधायकस्य गौरयमित्यस्य सविकल्पकस्योत्पादकतया भवति व्यवहाराङ्गम्। आह च शान्तरक्षितः--

‘अविकल्पमपि ज्ञानं विकल्पोत्पत्तिशक्तिमत्।
निःशेषव्यवहाराङ्गं तद्द्वारेण भवत्यतः’॥ (तत्त्वसं. प. ३९०)

इति। यद्यपि दृष्टमेवान्यत् विकल्पश्चान्यः, क्षणिकं हि सर्वम्, दृष्टं स्वलक्षणम्, विकल्पश्च सामान्यात्मा, तथाऽपि दृश्यविकल्पयोरनन्यताध्यवसायाद् भवति प्रवृत्तिः। तदुक्तं स्वावभासितार्थाध्यवसायोत्पादनशक्तिमत्तया व्यवहाराङ्गत्वम्। ननु सविकल्पस्यापि सम्यक्ज्ञानतया प्रामाण्यमभ्युपेयम्। न। अपूर्वगोचरमेव सम्यक्ज्ञानं प्रमाणं, सविकल्पकश्च नापूर्वगोचरः, प्रत्यक्षगृहीतमेव हि गृह्णाति, अनन्यतयैव तु ग्रहः। उक्तं च कमलशीलेन–'प्रत्यक्षं कल्पनापोढमपि सजातीयविजातीयव्यावृत्तमनलादिकमर्थं तदाकारनिर्भासोत्पत्तितः परिच्छिन्ददुत्पद्यते। तच्च नियतरूपव्यवस्थितवस्तुग्राहित्वाद् विजातीयव्यावृत्तवस्त्वाकारानुगतत्वाच्च तत्रैव वस्तुनि विधिप्रतिषेधावाविर्भावयति–अनलोऽयं नासौ कुसुमस्तबक इति, तयोश्च विकल्पयोः पारम्पर्येण वस्तुनि प्रतिबन्धादविसंवादित्वेऽपि न प्रामाण्यमिष्टम्। दृश्यविकल्पयोरेकत्वाध्यवसायेन प्रवृत्तेरनधिगतवस्तुरूपाधिगमाभावात्' इति। ( तत्त्वसं० पं. ३९० )

ननु दृष्टादध्यवसिताच्चान्यदेव यत् प्राप्यते, तन्न स्वावभासितार्थप्रापकत्वं प्रत्यक्षस्येति कथमस्य प्रामाण्यमितिचेन्न। सन्तानैक्यात्तदुपपत्तेः। उक्तं च पार्श्वदेवेन–'प्रापणीयश्च प्रत्यक्षस्य सन्तान एवे'ति ( न्यायप्रवेशवृत्तिपञ्जिका ७७ )

8–22 प्रत्यक्षं विभजते–**तच्चतुर्विध**मिति। **चक्षुरादीन्द्रियपञ्चकाश्रयेणे**ति। आश्रयता चैषामसाधारणकारणतया। **रूपविषय**मिति। रूप्यते इति रूपं दृश्यमात्रम्। रूपादिप्रत्यक्षे विषयस्यापि हेतुतया विषयाश्रयमित्यपि वक्तुं शक्येतेत्येतां शङ्कां परिहरन्नाह–**इन्द्रियप्रत्यक्षमिति व्यपदेशस्ये**ति। उक्तं च–'असाधारणहेतुत्वादक्षैस्तद् व्यपदिश्यते' इति कल्पनापोढस्यास्य चाक्षुषादेर्विकल्पोत्पादनद्वारेणैव स्वावभासितेऽर्थे प्रमाणता, अनुत्पन्ने तु विकल्पे न प्रामाण्यं, न तावता क्षतिः, व्यवहाराङ्गतया हि प्रमाणं निरूप्यते। व्यपेतसकलवासनस्य संभवत्यपि निर्विकल्पके प्रत्यक्षे सविकल्पानुत्पादेन न तमपेक्ष्य प्रमाणम्। द्वारानुत्पत्तेः न च द्वारेण द्वारिणोऽन्यथासिद्धिरित्यभिप्रायेणाह–**इदं** चेत्यादिना।

9–1 अथ मानसप्रत्यक्षं लक्षयति–**स्वविषये**ति। उक्तं चेदं लक्षणं न्यायबिन्दौ धर्मकीर्तिना। लक्षणवाक्यं व्याचष्टे–**स्वशब्देने**त्यादिना। विशेषणघटकस्य स्वशब्दस्य विशेष्यपरता हि युक्ता। **सहकारिणे**ति। सहकारित्वं चास्यैककार्यकारितया। इन्द्रियज्ञानं, तद्विषयसन्तानवर्ती तदनन्तरसंमुत्पन्नो घटादिद्वितीयक्षणश्चेत्युभयं मिलित्वा मानसं प्रत्यक्षं जनयतीति यावत्। **समनन्तरप्रत्ययसंज्ञकेने**ति। प्रत्ययः–कारणम्, उक्तंच–'हेतुः प्रत्ययो निमित्तं करण××मिति पर्यायाः' इति। समनन्तरः–समित्यनेन समानत्वं गम्यते। साम्यं च ज्ञानत्वेन। अनन्तरः–अव्यवहितः–अव्यवहितपूर्वः, उत्तरविज्ञाने हेतुभूतस्यैकसन्तानवर्तिनो ज्ञानस्य समनन्तरप्रत्यय इत्येषा संज्ञा। वक्ष्यति च–'स्वसन्तानवर्तिन्युपादाने ज्ञाने रूढ्याप्रसिद्ध' इति। उपरते चक्षुर्व्यापारे अनुक्षणं यद्विज्ञानं तेन चक्षुर्विज्ञानेन स्वविषयानन्तरविषयसहकृतेनोत्पाद्यते, तन्मानसप्रत्यक्षमिति पर्यवसितमिति। **अव्यवहारित्वं पुनरस्ये**ति। अस्योक्तलक्षणलक्षितस्य मानसप्रत्यक्षस्य व्यवहारपथागोचरत्वमित्येष दोषो न भवति। न ह्यतिप्रसङ्गोऽप्रसङ्गो वा लक्षणस्य, सत्यां

सामग्र्यां व्यवहारपथगोचरता, असत्यां च न, तावताऽस्य कोऽवगुण इति भावः। व्यवहारागोचरं व्यवहारानङ्गभूतं किमिर्तिष्यते इत्याशङ्कायामाह–**आगमप्रसिद्ध**मिति। आगम एव तत्सद्भावे प्रमाणमिति यावत्। आगममेव दर्शयति–**यथोक्त**मिति।

9–18 ननु आगमे व्यवहारे सर्वथानुपयुक्तस्यास्याभ्युपगमो निरर्थक इत्याशयेनाशङ्कते–**नन्वि**ति। परिहरति–**ईदृग्लक्षणे**ति। अयमाशयः–नहि लोकव्यवहारेऽनुपयुक्ततामात्रेण वस्तु अपह्नोतुं शक्यते। अस्ति चेदं प्रत्यक्षं, वस्तु विवेचनीयं तु लक्षणेन। उक्तेन च लक्षणेन तत् प्रत्यक्षं विवेचितं भवति। तदनेन विवेचनेन आगमे परेषामविशुद्धयाशङ्कापि निरस्ता भवतीति।

आहच धर्मोत्तराचार्यः–'एतच्च सिद्धान्तसिद्धं मानसप्रत्यक्षं, नचास्य प्रसाधकं प्रमाणमस्ति; एवंजातीयकं यदि स्यात् न कश्चित् दोषः स्यादिति वक्तुं लक्षणमाख्यातमस्येती'ति। ( न्यायबि० टीका १४ )

9–21 **अथ** स्वसंवेदनप्रत्यक्षं निरूपयति-**सर्वचित्तचैत्ताना**मित्यादिना। यच्चित्तचैत्तानामात्मसंवेदनं भवति तदेव स्वसंवेदनमुच्यते इत्यर्थः। तदेतद् व्याचष्टे–**चित्त**मित्यादिना। **वस्तुमात्रग्राही**ति–नीलादिबाह्यवस्तुमात्रग्राहिप्रत्यक्षमित्यर्थः। चित्ते भवाश्चैत्ताः–नैते बाह्याः, अन्य एव नीलादिभ्यो बाह्येभ्यः सातादय आभ्यन्तराः, दृश्यमानस्य नीलादेर्वस्तुनो विशेषावस्थाग्राहका ज्ञानप्रभेदाः सुखदुःखोपेक्षालक्षणा नीलादिवस्तुषु साक्षात्क्रियमाणेषु जायन्ते, तान्येतानि येन रूपेण संवेद्यन्ते तत् स्वसंवेदनप्रत्यक्षमुच्यते। तदपि हि कल्पनापोढमभ्रान्तं च। इदमभिहितं भवति–नीलादिबाह्यवस्तुसाक्षात्कारसमये स साक्षात्कारो नानवभासमानस्तिष्ठति नीलादिवत्, तथा सातादिकमपि, तदेषामवभासः स्वेनैवोत्पन्न इति स्वसंवेदनं प्रत्यक्षमुच्यते इति। आह चाचार्यदिङ्नागः–

'चित्तमप्यर्थरागादि स्वसंविन्निर्विकल्पकम्' इति। वृत्तिश्च–'चित्तमपि रूपादीनुपलभ्य यदनुभवाकारेण वर्तते, तन्निर्विकल्पकमेव। इच्छाक्रोधमोहसुखदुःखादिकं हि इन्द्रियमनपेक्ष्य भवतीति स्वसंवेदनं प्रत्यक्षमिति। ( प्रमाणसमुच्चय। १७ )

ननु स्वसंवेदनमित्यनेन स्वेनैव स्वयं संवेद्यत इत्युक्तं भवति नचैकस्यामेव क्रियायामेकस्यैव कर्तृत्वं कर्मत्वं चोपपद्यते इत्याशयेन शङ्कते–**अत्र केचिदाहु**रिति। नावयवार्थयोगेनायं शब्दोऽत्र प्रवर्तते, किन्तु–प्रकाशकान्तरनिरपेक्षप्रकाशस्वभावतामभिप्रेत्य स्वसंवेदनमित्युच्यते इत्याशयेन समाधत्ते–**अत्रोच्यते** इत्यादिना।

10–3 **व्यवस्थाप्यव्यवस्थापकभावेने**ति। सर्वमेव वस्तु हेतुबलादुत्पद्यमानं भिन्नभिन्नस्वभावमुत्पद्यते इति वस्तूनां स्वभावविशेषे व्यवस्थापकस्तत्तद्धेतुरेव, तस्मात् वस्तुस्वभावव्यवस्थापको हेतुविशेषः, तद्व्यवस्थाप्यश्च वस्तुस्वभावविशेष इति भावः। प्रकाशकान्तरनिरपेक्षप्रकाशस्वभावतामुपपादयति–**यथे**त्यादिना।

नैयायिकाभिमतां ज्ञानस्य जडरूपतां प्रतिक्षिपति–**नचेत्या**दिना। ज्ञानस्य ज्ञानान्तरप्रकाश्यत्वे किं समकालवर्तिना ज्ञानान्तरेण प्रकाश्यते उत भिन्नकालवर्तिनेति विकल्प्य क्रमाद् दूषयति–**न तावदि**ति। प्रकाश्यप्रकाशकभावो ह्युपकार्योपकारकभाव-

लक्षणः, स च समकालभाविनोर्न घटते । न हि वामदक्षिणविषाणयोर्मिथ उपकार्योपकारकभाव इति भावः । **नापीति** । ज्ञानं स्वानन्तरोत्पन्नेन ज्ञानान्तरेण अहमिदं जानामीत्यनुव्यवसायात्मकेनावभास्यते इत्येतन्नोपपद्यते । वस्तुमात्रस्य क्षणिकत्वेन द्वितीयक्षणे तस्य विनाशात् क्व प्रकाशावसरः, अतो ज्ञानमात्रमप्रकाशात्मकं स्यात्। काणादा हि ज्ञानस्य क्षणद्वयावस्थायित्वमभ्युपगच्छन्तोऽनुव्यवसायगोचरत्वमुपपादयन्ति । वस्तुमात्रस्य क्षणभङ्गसमर्थनेन न तद्वादस्यावकाशः ।

10-14 **परोक्षं यदि तत् ज्ञान**मिति । क्षणिकस्यास्य ज्ञानस्य ज्ञानान्तरसंवेद्यत्वासंभवात् स्वसंवेद्यत्वस्य चानभ्युपगमे घटादिवत् परोक्षत्वात् घटादिबाह्यार्थसधर्मतया ज्ञानमिति कोऽयमर्थविलक्षणो व्यपदेशः । परोक्षस्यास्य प्रकाशकं न किमपीति तत्स्वरूपं केन वा लक्ष्येतेत्यर्थः ।

10-16 ज्ञानस्य स्वसंवेद्यत्वानभ्युपगमेऽनिष्टं प्रसञ्जयति–**अपिचे**त्यादिना । नागृहीतेति । विशिष्टज्ञाने विशेषणज्ञानस्य हेतुत्वादिति यावत् ।

10-21 ननु भवति चाक्षुषं रूपमिति ज्ञानं, चक्षुश्चाप्रत्यक्षम्, अगृहीतमपि तच्चक्षुर्विज्ञायते रूपस्य विशेषणतया । तन्नागृहीतविशेषणा विशिष्टबुद्धिरिति नायं नियमः, तस्मादसंविदितस्यापि ज्ञानस्य ज्ञातोऽर्थ इत्यर्थविशेषणतयाऽवभासो युज्यत इत्याशयेन शङ्कते–**यच्चोक्त**मिति । चाक्षुषं रूपमिति विज्ञाने न चक्षुर्विशेषणतयाऽवभासते, अपितु चक्षुर्विज्ञानम्, इदं च विज्ञानस्य स्वसंवेद्यत्वमन्तरा नोपपद्यते इति नः पक्ष एव सिद्ध्यतीत्याशयेन प्रतिविधत्ते–**तदसाध्वि**ति ।

10-25 ज्ञानस्य स्वसंवेद्यत्वं न कर्मकर्तृभावेन, किन्तु व्यवस्थाप्यव्यवस्थापकभावेनेत्येतदुपसंहरति–**तस्मा**दिति । आप्तवचनं स्वोक्तार्थे संवादयति–**यथाक्त**मिति । विज्ञानं जडस्वरूपेभ्यो नीलाद्यर्थेभ्यो व्यावृत्तं–विलक्षणमजडरूपमेव–प्रकाशस्वभावमेव स्वहेतोर्जायते। अस्य ज्ञानस्य येयमजडरूपता सैवास्य ज्ञानस्य आत्मसंवित्तिः स्वसंवेद्यतेत्यर्थः । इयं च कारिका शान्तरक्षितस्य ( तत्त्वसंग्रह ९९९ )

व्याख्याता च कमलशीलेन–'नहि ग्राहकभावेनात्मसंवेदनमभिप्रेतम्, किं तर्हि, स्वयं–प्रकृत्या प्रकाशात्मतया नभस्तलालोकवद्' इति ।

ननु दीपस्य परप्रकाशकस्य स्वप्रकाशस्वभावतेवास्तु नीलादिबाह्यार्थप्रकाशकस्य ज्ञानस्य स्वप्रकाशता, अर्थानवभासकस्य सुखस्य सा कथम् । सुखादयस्तु स्वाश्रयाश्रित ज्ञानावभास्याः ज्ञानतो भिन्नाः ।

अत्रोच्यते–रूपाद्यनुभवसमकालमेव भवति सुखानुभवोऽपि । एवं सति केनावभास्यते सुखमिति वक्तव्यम् । नन्वनेनैव रूपावभासेनेति न वक्तुं शक्यम्, बाह्यालम्बनेनानेनाभ्यन्तरस्य सुखस्यावभासः कथं घटेत । ननु मानसेनान्येन ज्ञानेनेतिचेत् ज्ञानानां क्रमिकत्वनियमोऽभ्युपगतो विहन्येत । ननु नीलावलम्बिविज्ञानसमनन्तरं मानसं विज्ञानमुत्पद्यते, येन सुखमवभास्यते, ज्ञानानामुत्पत्तावेव तु क्रमनियमः, स्थिति-

स्तु युगपदपि, बाह्यरूपानुभवसमकालमेव सुखानुभवो भवतीत्यपि नोपहतमिति। न। वस्तुमात्रस्य क्षणिकत्वेन तदनुपपत्तेः। किञ्च–नीलादिवत् सुखस्य ज्ञानान्तरावभास्यत्वे नीलादिवद्विच्छिन्नप्रभासित्वमापद्येत। प्रपञ्चितं चैतत् शान्तरक्षितेन—

'अवेदकाः परस्यामी स्वविद्भाजः कथं नु ते।
एकार्थाश्रितविज्ञानवेद्यास्त्वेते भवन्ति चेत्।
नैरन्तर्यप्रवृत्ते हि बाह्यवस्तूपलम्भने।
सुखादि वेद्यते कस्मात् तस्मिन् काले निरन्तरम्। (तत्त्वसं. ३९६)

इत्यादिना।

11–1 योगिज्ञानं निरूपयति–**भूतार्थे**ति। भूतार्थभावनाप्रकर्षपर्यन्तजं यज्ज्ञानं तद् योगिज्ञानमित्यर्थः। लक्ष्यवाक्यं व्याचष्टे–**योग** इत्यादिना। **निःशेषेति**। चित्तैकाग्रतया साध्यते निःशेषतत्त्वविवेचिका प्रज्ञा, सैव योगशब्देनोच्यते, साध्ये साधनोपचारादिति भावः। **तत्प्रत्यक्ष**मिति। तस्य योगिनो जायमानं प्रत्यक्षमित्यर्थः। लक्षणवाक्यं व्याचष्टे–**भूतार्थ** इत्यादिना। भूतशब्दस्य कालविशेषपरताभ्रमं व्यावर्तयन् व्याचष्टे–**प्रमाणोपपन्नार्थ** इति। तस्य भावना, का भावना, आह–**पुनः पुनश्चेतसि समारोप** इति। तस्याः प्रकर्षः–भाव्यमानार्थस्य स्फुटाभत्वारम्भावस्था, तस्य पर्यन्तः–स्फुटाभत्वाव्यवहितपूर्वावस्था स्फुटत्वोन्मुखीभूता, तामवस्थां निदर्शनेन प्रदर्शयति धर्मोत्तराचार्यः–'अभ्रकव्यवहितमिव यदा भाव्यमानं वस्तु पश्यति सा प्रकर्षपर्यन्तजावस्थे'ति। (न्याय बि. टीका १९) तस्मात् प्रकर्षपर्यन्ताज्जातं यत् ज्ञानं भूतार्थस्फुटावभासात्मकं करतलामलकावभासवद्भवति तदिदं योगिप्रत्यक्षमिति यावत्। तच्चेदं निर्विकल्पकमिति कल्पनापोढमभ्रान्तमिति प्रत्यक्षलक्षणमुपपन्नम्। तदिदमभिप्रेत्याह–**कल्पनापोढमभ्रान्तमिति**।

उक्तं चाचार्यदिङ्नागेन—'योगिनां गुरुनिर्देशादसंकीर्णार्थमात्रदृक्' इति। (प्रमाणसमुच्चय १७) 'यथा चित्तं निर्विकल्पकं तथा योगिनां ज्ञानमपि भवति। योगः समाधिः स यस्यास्ति स योगी। अत्र विषयेण विषयिनिर्देशः। आगमस्य सविकल्पकत्वं निर्देशशब्देनोक्तं तेनासंकीर्णं रहितमित्यर्थः। अनेन स्फुटाभत्वमपि गम्यते। मात्रशब्दः आरोपितव्यवच्छेदार्थः' इति टीकायां व्याख्यातम्।

1–6 प्रसङ्गाद् भूतार्थान्निरूपयति–**भूतार्थ** इत्यादिना। के भूतार्थाः, ते च कथं भावयितव्याः, यद्भावनाप्रकर्षपर्यन्तजं योगिज्ञानम्, तदेतदाह–**भूतार्थाश्चतुरार्यसत्य**मित्यादिना **प्रतिपत्तव्य**मित्यन्तेन। चत्वार्यार्यसत्यानि दुःखं समुदयो निरोधो मार्गश्चेति। तत्र दुःखं यदिदं भूतचतुष्टयं ये चेमे विषया रूपादयः, यानि च चक्षुरादीनीन्द्रियाणि, सर्वमिदं दुःखपरिणतित्वेनैकराश्येन दुःखमित्युच्यते। येन हेतुनाऽस्य भवति समुदयः, स समुदय उच्यते। यश्चास्य दुःखस्य निरोधो निर्वाणलक्षणः स निरोध उच्यते। यो निरोधस्य द्वारं सम्यग् ज्ञानादिः स मार्ग उच्यते। **पञ्चस्कन्धस्वभाव**मिति। रूपस्कन्धो वेदनास्कन्धः संज्ञास्कन्धः संस्कारस्कन्धो विज्ञानस्कन्ध इति पञ्चस्कन्धाः। दुःखसमुदयनिरोधमार्गाणामेतेष्वन्यतमतया पञ्चस्कन्धस्वभावमित्युच्यते। रूपस्कन्धादीनां विवेकस्तु अन्यतो बोध्यः।

ननु तदेवेदमिति प्रत्यभिज्ञायमानस्य सर्वस्य क्षणिकत्वभावनं कथमित्यत्राह—**यत्सत्तत्क्षणिकमित्यनुमानेने**ति। सेयं दीपज्वालेति प्रत्यभिज्ञानमिवेदमपि प्रत्यभिज्ञानमनुमानप्रमाणबाधिततया भ्रमरूपमिति यावत्। एतदनुमानविचारोऽन्यतो बोध्यः।

11-9 विषये विप्रतिपत्तिं निरस्यन्नाह—**तस्ये**त्यादिना। व्याचष्टे तदेव स्ववाक्यं—**'तस्य चतुर्विधस्ये**ति। लक्षणं—लक्ष्यते वस्तु येन रूपेण तल्लक्षणं—वस्तुनो रूपम्। यदसाधारणं रूपं तत् स्वमुच्यते, असाधारणं वस्तुनस्तत्त्वं स्वलक्षणमित्युक्तं भवति। तदेतदाह—**स्वलक्षणमित्यसाधारणं वस्तुरूपं देशकालाकारनियत**मिति। यत्सामान्यं परैः प्रत्यक्षस्य विषय इष्यते तत्तु अनियतदेशकालाकारम्, तन्न प्रत्यक्षस्य विषय इति यावत्। इदमेव विशदयति—**घटादि**रित्यादिना। प्रमाणगोचरो हि द्विविधः, ग्राह्यः प्रापणीयश्चेति, यदाकारं ज्ञानमुत्पद्यते स ग्राह्यः, येन रूपेणाध्यवस्यति स प्रापणीयः, तत्र प्रत्यक्षं देशकालाकारनियतेन घटादिस्वलक्षणाकारेणैवोत्पद्यते इति प्रत्यक्षस्य गोचरः स्वलक्षणमुच्यते। तत्सन्तानवर्ती अन्यो घटक्षणोऽध्यवस्यते प्रत्यक्षसमनन्तरभाविनाऽध्यवसायेन। **अनित्यत्वाद्यनेकधर्मोदासीन** इति। अनित्यत्वादिभिर्धर्मैरविशेषित इति यावत्।

11-13 **एतेनेति। स्वलक्षणस्यैव** प्रत्यक्षविषयत्वोपपादनेनेत्यर्थः। द्रव्यादिषु षट्सु द्रव्यं गुणः कर्म चेति त्रयाणां सत्ताजातियोगेनैकराश्यं पराभिमतं व्यञ्जयन्नाह—**यथाऽवयवि द्रव्यं गुणः कर्मे**ति। सामान्यविशेषयोः समवायप्रतियोगित्वमेव, न समवायानुयोगिता, इति तयोरैकराश्यम्। समवाये तु न तदुभयमपीति तेभ्यो विशेषः। **पराभिमता** इति। **परैः**—काणादैराक्षपादैश्चेत्यर्थः।

11-17 परैर्द्रव्यं नित्यानित्यविभागेन द्वेधा इष्यते। तत्र सर्वस्य वस्तुनः क्षणिकत्वसमर्थनेनैव नित्यद्रव्यनिरासात् तस्य प्रत्यक्षविषयत्वं निरस्तं भवति। अथ यदवयवि द्रव्यं तस्य प्रत्यक्षविषयत्वं निरस्यति—**तथाहि घटादावित्यादिना**।

अयमाशयः—दृश्यते नाम घटादि स्थूलं वस्तु, न स्थूलमित्येतावताऽवयवि वस्त्वन्तरं तत्। ये नामाणवस्त एव संहताः स्थूलतयाऽवभासन्ते, न चाणवोऽदृश्यस्वभावाः। परमाणवो नित्या अदृश्या इति च यत्सत्तत्क्षणिकमित्यतो निरस्तम्। यदुपलभ्यते स्थूलमिति तत्र भागा एव अंशा एव हि दृश्यन्ते नत्वंशी कश्चिदवयवी, पूर्वापरादिविभागेषु यदा पूर्वो भागो दृश्यते तदा तु नापरः, अपरे विभागे तु चक्षुःपथागोचरे नैव भवति नीलाद्यवधारणम्। किमपरो विभागो नीलो वा शुक्ल इति संशय एव। यद्यवयवी दृष्टः, अवधारितानवधारितभागभेदव्यवस्था नोपपद्येत। तस्मात् केश एको नोपलभ्यते स एव संहत उपलभ्यते, एवमिमे चाणवो भागाः संहता उपलभ्यन्ते। भागेभ्योऽन्यो भागी कोऽप्यवयवी स्यात्, मक्षिकादिनांशतस्तिरोहितोऽयमवयवी तिरोहित एवेति नैवोपलभ्येत। अतो युक्तं भागा एव भासन्त इति।

अत्राप्तसंवादं दर्शयति—**यदाह न्यायपरमेश्वर** इति। तथा तथा संनिविष्टाः—पूर्वापरात्मना संनिविष्टाः, (ग्रीवात्मना कम्ब्वात्मना संनिविष्टाः) आभ्यो भागेभ्योऽन्यस्तद्वान्—भागवान् विभागः—अवयविविभागो नैव दृश्यते। न हि तन्तुभ्योऽन्यः पटो नामावयवी दृश्यते, तथा तथा संनिविष्टास्तन्तव एव तु दृश्यन्ते। एवमेव तन्तुष्वप्यूह्यम्।

11-22 **गुणकर्मादीनां च दूषणं प्रत्येतव्यमिति** । दूषणप्रकारश्चायं—गृहाभ्यन्तरं-स्थिते घटादौ महति कुञ्चिकादिसूक्ष्मविवरवर्तिनाऽऽलोकेन दृश्यमाने समुपलभ्यते नीलमंशतः, तच्चैकमवयविसमवेतमनंशमभ्युपगच्छतामेकांशोपलम्भो न स्यात्, सर्वत एवोपलभ्येत । तथा आम्रफले कस्मिंश्चिदास्वाद्यमाने आस्वाद्यमानांशे समुपलभ्यमानो मधुररसः सर्वांशेनोपलभ्येत, न च भवति तथा, तत् न रूपरूपिविभागः, अंशा एव तूपलभ्यन्त इति तु सुस्थितम् । एवं गुणान्तरनिरसनमन्यतो बोध्यम् । क्षणविनाशिषु सर्वेषु भावेषु क्रियायाः कः प्रसङ्गः । सामान्यादिनिरासोऽप्यन्यतो बोध्यः ।

अथ प्रमाणे फलविप्रतिपत्तिं निरस्यन्नुपक्रमते—**ननु प्रमितिरूपा**मित्यादिना । प्रमीयतेऽनेनेति प्रमाणपदव्युत्पत्त्यनुरोधात् । प्रमितौ यत् करणं तत् प्रमाणमिति सिद्ध्यति । प्रमाणं च ज्ञानमिष्टम् । काऽसौ प्रमितिः, तत्करणं च ततोऽन्यत् प्रमाण-भूतं ज्ञानं किं, भेदेन हि तयोः फलफलिभावो निरूपणीयः । प्रत्यक्षप्रमाणतया भवदभिमते प्रमाणतत्फलयोर्भेदो दुर्निरूप इत्याशङ्कितुराशयः ।

11-24 आशङ्कां परिहरति—**उच्यते** इत्यादिना । **नीलादेरर्था**दिति । नीलादिबाह्यार्थावलम्बि यद्विज्ञानमुत्पद्यते, तद् द्विरूपमुत्पद्यते इत्यर्थः । द्वैरूप्यमाह—**नीलाकारनीलबोधस्वरूपं** चेति । तदेवमेकस्यैव प्रत्यक्षस्य द्वैरूप्ये सति तत्र याऽनीलाकारव्यावृत्तिलक्षणा नीलाकारता ज्ञानस्य, तदेव प्रामाण्यम्, या चानीलबोधव्यावृत्तिलक्षणा नीलबोधात्मता सैव तस्य फलरूपता, इति फलफलिभेद इत्याशयेनाह—**तत्रे**त्यादिना ।

निर्गलितमर्थमाह—**यथोक्तमर्थे**त्यादिना । अस्य—नीलादिबाह्यालम्बनस्य प्रत्यक्षस्य यथोक्तमर्थसारूप्यं—नीलादिसारूप्यमनीलाकारव्यावृत्तिलक्षणं, प्रमाणमुच्यते । यथोक्ता-अनीलबोधव्यावृत्तिलक्षणा नीलार्थावगतिः फलमुच्यते इत्यर्थः ।

11-28 नन्वेकस्मिन्नेव प्रत्यक्षे फलफलिभेदः कथं, साध्यसाधनभावनिबन्धनो हि स इति शङ्कां व्युदस्यन्नाह—**एतच्चे**त्यनेन । अयमाशयः—न साध्यसाधनभावनियतः फलफलिभावः, एकस्याप्याकारभेदेन स ह्युपपद्यते, यद्यप्यत्र नास्ति परमार्थतो भेदो वस्तुनः, प्रत्यक्षं तु वस्तुत एकमेव । अथापि इदं प्रमाणमिदं प्रमाणफलमित्याकार-भेदाद्भिन्नं व्यवस्थाप्यते । इयं च फलफलिभावव्यवस्था प्रत्यक्षसमनन्तरसमुत्पन्नेन सविकल्पकेन व्यवस्थाप्यत इति । आह च धर्मोत्तराचार्यः—'तस्मादसारूप्यव्यावृत्त्या सारूप्यं ज्ञानस्य व्यवस्थापनहेतुः; अनीलबोधव्यावृत्त्या च नीलबोधरूपत्वं व्यवस्था-प्यं, व्यवस्थापकश्च विकल्पप्रत्ययः प्रत्यक्षबलोत्पन्नो द्रष्टव्य' इति । (न्यायबिन्दुटीका १९) आहचेदमत्र शान्तरक्षितः—

'विषयाधिगतिश्चात्र प्रमाणफलमिष्यते ।
स्ववित्तिर्वा प्रमाणं तु सारूप्यं योग्यताऽपिवा' ॥

(तत्वसंप—३९८)

इति । व्याख्यातं चैतत् कमलशीलेन—'बाह्येऽर्थे प्रमेये विषयाधिगमः प्रमाणफलं, सारूप्यं तु प्रमाणम्' । 'ज्ञानात्मनि तु प्रमेये स्वसंवित्तिः फलं, योग्यता प्रमाणम्' इति । समनन्तरश्लोकव्याख्याने च—'नीलास्पदं संवेदनं न पीतस्येति विषयाधिगति-

व्यवस्थाया अर्थसारूप्यमेव निबन्धनं नान्यदिति व्यवस्थाप्यव्यवस्थापकभावेन साध्यं-साधनव्यवस्था, ' ' तस्मात् साकारमेव ज्ञानं प्रमाणं न निराकारं........व्यवस्था च तत्पृष्ठलब्धेन विकल्पेन वेदितव्ये'ति।

इदमत्र बोध्यं—नीलादिबाह्यविषयसारूप्यं प्रमाणं, नीलादिविषयावगतिः फलम्, इति वैभाषिकाः। नीलादिना बाह्येन ज्ञाने आहितः स्वाकारः प्रमाणं स्वसंवित्तिः फलं, न विषयावभासः इति सौत्रान्तिकाः। अप्रत्यक्षो ह्येषां बाह्यो विषयः, अनुमेयार्थवादिनो ह्येते। अनादिवासनोपप्लावितो योऽयं ज्ञानस्यैव बहिर्वदवभासमान आकारः, स एव तु प्रमेयः, प्रमाणं तु ज्ञानस्य स्वाकारः, या ग्राहकता योग्यतेति चोच्यते, स्वसंवित्तिः फलमिति योगाचाराः। एते विज्ञानमात्रवादिनः। इमं मतभेदं मनसि निधायाचार्यदिङ्नाग इदमाह—

' सव्यापारप्रतीतत्वात् प्रमाणं फलमेव तत्।
प्रमाणत्वोपचारस्तु निर्व्यापारे न विद्यते॥
विषयाकार एवास्य प्रमाणं तेन मीयते।
स्वसंवित्तिः फलं वाऽत्र तद्रूपादर्थनिश्चयात्॥
यदाभासं प्रमेयं तत् प्रमाणमथ तत्फलम्।
ग्राहकाकारसंवित्ती त्रयं नातः पृथक्कृतम् '॥ प्रमाणस. श्लो. ९-१०-११

11-29 इति। प्रत्यक्षे प्रमाणतत्फलयोर्वस्तुभेदो नास्तीत्यत्र धर्मकीर्तेर्वचनं प्रमाणयति—**यथोक्तमिति**। ननु किं सारूप्यं ज्ञानस्यार्थेन, निराकारं तु ज्ञानमित्याशंकां निरस्यन्नाह—**यदि पुनरिति**।

इति प्रत्यक्षपरिच्छेदः

---

# अनुमानपरिच्छेदः

13-1 अथानुमानं विभजते–**अनुमानं द्विधेति**। नन्वनिरूप्यानुमानसामान्यलक्षणं तद्विभजनमनुचितम्, लक्षण एव हि प्रथमतो जिज्ञासा समुदेति। सत्यम्। सति समनुगते लक्षणे प्रथमं तदेव निरूपणीयम्। असति तु विशेषयोरेव। स्वार्थं ज्ञानात्मकं परार्थं तु वचनात्मकम्, तदेनयोर्विसजातीययोर्नैकं लक्षणं घटते। तत् प्रथमं विभज्यैव तयोर्लक्षणं वक्तव्यमिति युक्तो विभागः।

स्वार्थमित्येतद् व्युत्पादयति–**स्वस्मै यत् तत्स्वार्थ**मिति। परार्थानुमानाद्भेदमाह–**ज्ञानात्मक**मिति। स्वार्थतामुपपादयति–**पर्वतादा**वित्यादिना। परार्थमित्येतत् व्युत्पादयति–**परस्मै यत्तत्परार्थानुमान**मिति। परार्थतामुपपादयति–**त्रिरूपे**त्यादिना। ज्ञानविशेषबोधकस्यानुमानशब्दस्य शब्दे प्रवृत्तिः कथमित्यत आह–**उपचारा**दिति।

ननु–त्रिरूपलिङ्गावबोधकमेकत्र दर्शनमन्यत्र शब्दः, तावता कथमनुमानद्वैविध्यम्, यद्येवं चक्षुषोऽपि परार्थानुमानत्वं प्रसजेत्। मैवम्। त्रिरूपलिङ्गसूचकः शब्दः, शब्दो ह्यर्थस्य विवक्षाद्वारेण भवति सूचकः। चक्षुस्तु साक्षात्त्रिरूपलिङ्गप्रत्यायकः। सूचक एव तु परार्थानुमानमित्यस्माकं परिभाषेति। तथाचोक्तं शान्तरक्षितेन—

> 'त्रिरूपलिङ्गवचसः सत्तासंसूचकत्वतः।
> यत्परार्थानुमानत्वमुक्तं तच्छ्रोत्रपेक्षया॥
> गौणं साङ्केतिकं चैवमनुमानत्वमाश्रितम्।
> सक्तसंसूचकत्वेन तेन नातिप्रसज्यते'॥ (तत्त्वसं.प. ४३१)

इति। व्याख्यातं च कमलशीलेन–'वचनस्य यत्परार्थानुमानत्वमुक्तम्, तच्छ्रोत्रपेक्षया। तेन वक्त्रपेक्षाभावी दोषो न भवति। श्रोत्रपेक्षयाऽपि त्रिरूपलिङ्गसूचनादुपचारेणानुमानकारणत्वात् समयाद्वाऽनुमानत्वमुक्तम्। सक्तसंसूचक एवानुमानसंज्ञानिवेशात् तेनेन्द्रियस्याविनाभावित्वसंबन्धज्ञानस्य च परार्थानुमानत्वप्रसङ्गादतिप्रसङ्गो न भवति। तयोः सक्तसंसूचकत्वाभावा'दिति।

13-7 स्वार्थानुमानं निरूपयति–**तत्र स्वार्थ**मिति। त्रिरूपलिङ्गजन्यमनुमेयार्थविज्ञानं स्वार्थानुमानमिति यावत्। किं तदनुमेयार्थविज्ञानम्, यत्त्रिरूपलिङ्गज्ञानाद्भवति तदाह–**तत्त्वेति**। **धर्मिविशेषेति**। धर्मिविशेषः–पक्षः, साध्याविनाभावित्वनिश्चयः। लिङ्गे इति शेषः। सपक्षेषु संबद्धं विपक्षेभ्यो व्यावृत्तं पक्षे च संबद्धं लिङ्गं पश्यतः पक्षांशेन भवति लिङ्गे साध्याविनाभावित्वनिश्चय इति भावः। **अग्न्यध्यवसाय इत्यन्ये** इति। अत्राग्निरयमग्निमान्वेति निश्चय इति यावत्। सामान्यमस्य विषय इति तु पूर्वमेवोक्तम्।

13-10 अनुमानलक्षणे त्रिरूपं लिङ्गं प्रसक्तम्; प्रसक्तं त्रैरूप्यं निरूपयति–**संप्रतीत्या**दिना। तत्र पक्षधर्मतासंज्ञकं प्रथमं रूपमाह–**अनुमेये सत्त्वमेव निश्चित**मिति। कोऽयमनुमेयः? आह–**पर्वतादौ धर्मिणी**ति। यद्यपि पर्वतः प्रत्यक्षेणैवावगतः, अथापि नाग्निधर्मा, अतोऽयमग्निमान् पर्वत इत्यग्निविशिष्टतया भवत्यनुमेयः, तदिदं ज्ञापयितुमुक्तं **प्रर्वते** धर्मिणीति। सत्यपि त्रैरूप्येऽनिश्चिते तस्मिन् नानुमानोदय इत्येतदवगमयन्नाह–

**निश्चित**मिति । अत्र सत्त्वग्रहणेनेति । लिङ्गस्यानुमेयार्थविबोधने सपक्षसत्त्वादीनि त्रीणि भवन्ति रूपाण्यङ्गानि । एतेष्वन्यतमेनापि विकलो भवति लिङ्गाभासः । तत्र पक्ष-सत्त्वं चेद्रूपं नेष्यते तदाऽसिद्धे लिङ्गाभासेऽतिप्रसङ्गः स्यात्तन्निरासाय तद्रूपमुपात्तमिति भावः । सत्त्वमेवेत्ययोगव्यच्छेदार्थस्यैवकारस्य प्रयोजनमाह—**एवकारेणेत्या**दिना । व्यावर्त्यं पक्षैकदेशासिद्धमुदाहरति—यथा **दिगम्बरप्रयोग** इति । **न सर्वेषु तरुष्वि**ति । योऽयं हेतुतया निर्दिष्टः स्वापः पत्रसङ्कोचलक्षणः, स सर्वेषु तरुषु पक्षेषु नास्ति, केचन ह्यसङ्कुचितपत्रा एवाहर्निशम्, नानेन सर्वेषु तरुषु सिषाधयिषितं चेतनत्वं सिद्ध्येत्, तस्मात् पक्षैकदेशा-सिद्धः असत्येवकारे कस्मिंश्चित्तरौ विवक्षितस्य स्वापस्य सत्त्वादतिप्रसङ्गः स्यात् । एवकारेण पक्षेऽसत्त्वस्य व्यवच्छेदान्नातिप्रसङ्ग इति भावः ।

13-16 निश्चितमित्यस्य प्रयोजनमाह—**निश्चितग्रहणेने**ति । अयमाशयः-अस्ति नाम पर्वते धूमः, पश्यतोऽस्य तं धूमो वा बाष्पो वेति यदा संशयोऽभूत्, तदाऽयं धूमादित्वेन संदि-ह्यमानो भूतसङ्घातः सन्दिग्धासिद्धः, बाष्प एव वा तथा सन्दिग्धः । अत्र पक्षसत्त्वं मात्रज्ञातमिति भवत्यतिप्रसङ्ग इति भावः । इदमत्र बोध्यम्—लिङ्गेन त्रिरूपेण भाव्यम्, एकरूपवैकल्येऽप्यसल्लिङ्गमेव । त्रैरूप्यांशे चेद् भ्रमस्तेन जायमानं ज्ञानं नानुमानं भ्रम:एव, त्रैरूप्यांशे चेत् संशयो न भवेदेवानुमानम्, न ह्यक्षमिव सत्तयैव लिङ्गं ज्ञानं जनयितुं प्रभवति । एवं स्थिते किं लिङ्गलक्षणविचारे निश्चयपदग्रहणविचारेणेति ।

13-17 **सत्त्वशब्दात्पश्चादेवकारेणे**ति । अयमाशयः—अनुमेय एव सत्त्वं चेल्लिङ्गस्य रूप-मुच्येत, पक्षादन्यतो व्यावर्त्येत, तथासति सपक्षसत्त्वं रूपमपरं व्याहतं भवति, तथा च सति भवत्यसाधारणे सपक्षविपक्षव्यावृत्ते पक्षमात्रवृत्तावसाधारणेऽतिप्रसङ्ग इति ।

13-18 अथ द्वितीयं रूपं निरूपयति—**सपक्ष एवे**त्यादिना । **इति वर्तते** इति । इति च वर्तत इत्यर्थः—लिङ्गस्येदं द्वितीयं रूपमपि वर्तत इति भावः । **तत्र सत्त्वग्रहणेने**ति । अगृहीते द्वितीयं रूपमेव परित्यक्तम्, तथासति—शब्दो नित्यः कृतकत्वादित्यस्मिन्विरुद्धेऽतिप्रसङ्गः, कृतकत्वं ह्यस्ति पक्षे शब्दे, यद्यपि तृतीयं रूपं विपक्षेऽसत्त्वमित्येतन्न विरुद्ध इति न तत्रातिप्रसङ्गावकाशः । अथापि तद्रूपमधुनाऽनुपात्तमित्यभिप्रेत्येदं प्रयोजनमुक्तम् । सपक्ष-एव सत्त्वमिति द्वितीयरूपगम्यं तु तत् । उपात्ते तु विपक्षासत्त्वे सपक्षे सत्त्वोपादानस्य असाधारणव्यावृत्तिः प्रयोजनम् । शब्दो नित्यः श्रावणत्वादित्यत्र पक्षमात्रवृत्ति श्रावण-त्वं विपक्षत इव सपक्षतोऽपि हि व्यावृत्तम् ।

13-25 **सत्त्वशब्दात्पूर्वस्मिन्नेवकारेणे**ति सपक्षे सत्त्वमेवेत्यनुक्त्वा सपक्ष एव सत्त्वमित्यु-क्त्येत्यर्थः । सत्त्वमेवेत्युक्तावयोगव्यवच्छेदेन सर्वेषु सपक्षेषु सत्त्वं विवक्षितं स्यात्, तथा च सति—प्रयत्नानन्तरीयकत्वेन लिङ्गेन शब्देऽनित्यत्वसाधनं व्याहन्येत । यद्यत्प्रयत्नानन्त-रीयकं तत्तदनित्यं दृष्टं यथा घटादि । नहि विद्युदादावनित्यतया निश्चिते प्रयत्नानन्तरीयकत्वं नेत्येतावता तस्यानित्यत्वसाधकत्वं हीयेत । सपक्षेषु सत्त्वमेवेत्ययोगव्यवच्छेदार्थकैवकार-ग्रहणे तु विद्युदादौ प्रयत्नानन्तरीयकत्वाभावेन तस्य हेतुत्वं हीयते इति भावः । **न विद्युदादि**ति । घटादयः सपक्षा ग्राह्या येषु लिङ्गमिदमस्ति, न विद्युदादय इत्यर्थः ।

14-1 **अथ** तृतीयं रूपमाह—**असपक्षे चेति** । **असत्त्वग्रहणेनेति** । अयमाशयः— विपक्षेऽसत्त्वमेव निश्चितमित्यस्मिंस्तृतीये रूपेऽसत्त्वं चेन्नोपादीयेत, असपक्षे निश्चितमित्यर्थः स्यात् । तथासति विरुद्धस्येदं रूपम्, कथं लिङ्गस्य रूपं भवितुमर्हतीति । एतेन—विरुद्धे लिङ्गलक्षणस्य कथमतिप्रसङ्गापादनं घटेत, द्वितीयस्य रूपस्य सपक्षे सत्त्वस्याभावादिति शङ्का परास्ता । **एवकारेण साधारणस्येति** । विपक्षैकदेशवृत्तेरिति शेषः धूमे साध्येऽग्नौ हेतौ साधारणेऽस्ति पक्षे सत्त्वं सपक्षे च महानसादौ सत्त्वम्, विपक्षे च क्वचित् ह्रदेऽसत्त्वं चेति त्रयाणामपि रूपाणां सत्त्वादतिप्रसङ्गः । एवकारग्रहणे चायोग-व्यवच्छेदलाभात् सर्वेभ्यो विपक्षेभ्यो व्यावृत्तत्वलाभात् विपक्षेऽयोगोलके वह्नेः सत्त्वान्ना-तिप्रसङ्ग इति भावः । ननु सपक्ष एव सत्त्वमित्यवधारणगर्भं द्वितीयं रूपमुक्तम्, तच्च न साधारणे स्यात्, कथमतिप्रसङ्गावसरः । न । द्वितीयरूपान्तर्गतावधारणार्थ एव तु तृतीय रूपम्, तदेव तु निरूप्यते, तत् अधुना अवधारणाघटितमेव तु द्वितीयं रूपं बोध्यम् ।

14-4 निश्चितग्रहणस्य प्रयोजनमाह—**निश्चितग्रहणेनेति** । वीतरागोऽपि लोककल्याणा-येदं वक्तीति वदन्तं वादिनं प्रयोगेण निरस्यति कश्चित्—अवीतरागोऽयं पुरुषः वक्तृत्वात् रथ्यापुरुषवत् इति । अयं च हेतुः सन्दिग्धानैकान्तिकः, वीतरागोऽपि किमिति न ब्रूयादित्यस्यैव सन्देहः, यो नावीतरागः, स न वक्ता इति उपलखण्डादिनिदर्शनेन व्यतिरेके समर्थ्यमाने भवति संशयः उपलखण्डस्यावक्तृत्वं किं वीतरागत्वकृतमुत स्वत एवेति, तत् विपक्षेऽसत्त्वं न निश्चितमिति सन्दिग्धानैकान्तिकोऽयम्, एतद्व्यावृत्तये निश्चितपदमिति भावः ।

14-9 **एवकारेण विपक्षैकदेशवृत्तेरित्यादि** । इदं च वाक्यं ' निश्चितग्रहणेने'त्यतः प्राक् ' एवकारेण साधारणस्ये'त्यत्रैव स्थानमर्हति । इह तु—एवकारः असत्त्वग्रहणात्प्रागेव 'असपक्ष एवासत्त्व'मिति कुतो नोपात्त इत्यस्य प्रयोजनं वक्तव्यम्, तच्च धर्मोत्तराचार्येणो दाहृतम्—' असत्त्ववचनात् पूर्वस्मिन्नवधारणेऽयमर्थः स्यात् विपक्षे एव यो नाऽस्ति स हेतुः । तथा च प्रयत्नानन्तरीयकत्वं सपक्षेऽपि सर्वत्र नास्ति । ततो न हेतुः स्यात् । ततः पूर्वं न कृत'मिति । ( न्यायबिं. टी. २३ )

14-11 शङ्कते—**नन्विति** । परिहरति—**नेति पूर्ववृद्धा इत्यादि** । अयमाशयः—त्रिधा भवन्ति विपक्षाः साध्याभाववान् साध्यवदन्यः साध्यविरुद्धश्चेति । तदनुरोधेन व्यतिरेकावधारण-मपि भवति त्रेधा, यत्र नाग्निर्न तत्र धूमः, यो निरग्निः स निर्धूमः यत्राग्निविरुद्धं (जलं) न तत्र धूम इति । एषु त्रिविधेष्वन्यतमनियमज्ञापनाय पुनरुपादानमिति भावः । यद्वा—साध्यहेत्वोर्नियमो हि सम्बद्धयोरेव, संबन्धश्च तादात्म्यं तदुत्पत्तिर्वा, यत्र तदु-त्पत्तिः—वह्नेर्धूमस्य, यत्र न वह्निस्तत्र न धूम इत्यभावतो भवति विपक्षः, यत्र तु तादात्म्यं- वृक्षतादात्म्यं शिंशुपायां तत्र यो न वृक्षः स न शिंशुपेति भेदतः । उष्णोऽयं प्रदेशो वह्नेरित्यत्र उष्णविरुद्धः शीतः प्रदेशो भवति विपक्षः, य उष्णः स वह्निमान्, यस्तु शीतो न स तद्वान्, तद्विरुद्धहिमवानिति । तेष्वेतेषु विपक्षेषु यथायोग्यं व्यतिरेको बोध्य इति विवेकद्योतनाय तृतीयस्य पृथगुपादानमिति भावः । **प्रयोगनियमार्थमिति केचिदिति** । परार्थानुमाने प्रयोगे कार्ये नियमार्थम्, अन्वयिरूपवत् व्यतिरेकिरूपमपि यो धूमवान् सोऽग्निमान यो निरग्नि; स निर्धूम इति प्रयोक्तव्यमित्येतज्ज्ञापनायेति भावः ।

यद्वा–प्रयोगे कर्तव्ये नियमज्ञापनार्थम्–अयमाशयः–प्रयोगे हि अन्वयो व्यतिरेको वा नियमवानेव प्रयोक्तव्यो न तद्विरहितः। अन्यथा श्यामोऽयं तत्पुत्रत्वादित्यपि प्रयोगः साधुः स्यात्, यस्तत्पुत्रः स श्यामः पुत्रान्तरवत्, यस्तु न श्यामः स न तत्पुत्र इति अन्वयव्यतिरेकयोः प्रयोगसंभवात्। परं न श्यामत्वतत्पुत्रत्वयोरस्ति कश्चन प्रतिबन्धः, यत्तयोर्न प्रयोज्यप्रयोजकभावो न वा तादात्म्यं, तदन्वयव्यतिरेकौ नियमवतोरेव प्रयोक्तव्यौ, सति नियमे द्वयोरन्यतरप्रयोग एव तु पर्याप्तः, नोभयमप्यपेक्षितमिति द्योतनाय पृथगुक्तमिति भावः। धर्मोत्तराचार्यश्चेदमाह–तदुच्यते इत्यादिना। (न्यायबि. टी. २४)

14-15 लिङ्गं विभजते–**त्रिरूपाणि** चेति। त्रैरूप्यलक्षणलक्षितानि लिङ्गानि त्रिप्रकाराणि भवन्तीत्यर्थः। त्रिरूपाणीति पदं व्याचष्टे–**त्रीणि रूपाणि येषां तानी**ति। प्रकारभेद माह–**अनुपलब्धि**रित्यादिना। लिङ्गानां पर्यायशब्दानाह–**साधन**मित्यादिना। सुख-प्रतिपत्तेः प्रसिद्धेश्च विभजनक्रमव्युत्क्रमेण त्रीणि तानि निरूपयति–**तत्र कार्य**मित्या-दिना प्रयोगमुखेन। कार्यं लिङ्गं दर्शयति–**यत्र धूमस्तत्राग्नि**रित्यनेन। धूमो ह्यग्नेः कार्यम्, तेनेदं कार्यलिङ्गमुच्यते, कार्यं भवति हेतोर्गमकम्। परार्थानुमाने वक्तव्यं न्यायावयवविभागनिर्णयमत्रैव प्रसङ्गादाह–**व्याप्तिपक्षधर्मतासंज्ञकं द्वयमेव**ति।

14-20 अत्र परेषां पक्षं निरस्यन्ननुवदति–**अन्ये** त्वित्यादिना। निरस्यति–**एतच्चायुक्त**-त्यादिना। अयमाशयः–प्रतिज्ञेयमनुपयोगिनी, नहि साधनाङ्गं प्रतिज्ञा, ननु सिषाधयिषितस्य साध्यस्यावबोधनाय तदपेक्षेति चेत्, कथमसम्बद्धमभिदध्यात् शब्दः, नह्यस्ति शब्दा-र्थयोः सम्बन्धः, शब्दप्रमाणनिराकरणावसरे संबन्धाभावः समर्थितः प्राक्। ननु विवक्षामवगमयति शब्दः। अतः पारम्पर्येण साध्याधिगतिहेतुत्वाद्भवति प्रतिज्ञा साध-नाङ्गम्। अथापि तदनङ्गमेव तत्। नहि सक्तः संसूच्यते तया। न हि प्रथमं सिषाध-यिषितावबोधनमवश्यमपेक्ष्यते। तस्मादसक्तसंसूचकत्वात्प्रतिज्ञा नानुमानाङ्गम्। व्याप्तिपक्ष-धर्मतावचनाभ्यामेवानुमाननिष्पत्तेः। नन्वनवयवभूतमपि यथा महानसे इति दृष्टान्तपदं प्रयुज्यते, तथा प्रतिज्ञावचनं प्रथमं प्रयोगे सिषाधयिषितज्ञापनाय प्रयोक्त-व्यमितिचेत् एवं सति वादिनं प्रतिवादिनं वा प्रयोगनिर्देशे प्रवर्तयत् ‘शब्दस्यानित्यत्वं साधय, नित्यत्वं साधये’त्यादि प्रेरयितुर्वचनमपि तथा स्यात्। आहचात्र शान्त-रक्षितः–

‘प्रतिज्ञादिवचोऽप्यन्यैः परार्थमिति वर्ण्यते।  
असाधनाङ्गभूतत्वात्प्रतिज्ञाऽनुपयोगिनी॥  
असंबद्धान्न साक्षाद्धि सा युक्ताऽर्थोपपादिका।  
असक्तसूचनान्नापि पारम्पर्येण युज्यते॥  
साध्यसाधनधर्मस्य विषयस्योपदर्शनात्।  
दृष्टान्तपदवत्त्वेषा साधनाङ्गं यदीष्यते॥  
अभ्यनुज्ञादिवाक्येन नन्वत्र व्यभिचारिता।  
निष्फलं च तदा तत्र विषयस्योपदर्शनम्’॥

(तत्त्वसं. प.–४१८)

इति। प्रतिज्ञाया अवयवानङ्गत्वेनानुपयुक्तत्वे सिद्धे पञ्चम्यन्तहेतुप्रयोगस्य क्वोपयोग इत्याह–**प्रतिज्ञामन्तरेणेति** । निगमनस्यावयवानङ्गतामाह–**यत्र प्रतिज्ञैव नास्तीत्यादिना** । अत्रेदं बोध्यम्–प्रतिज्ञावचनान्नाधिकोऽर्थः सिद्ध्यति निगमनेन । तत् निगमनं प्रतिज्ञामभ्युपगच्छतां मते पुनरुक्तमापद्यते । तथाचाचार्यदिङ्नागः–'निगमनं पुनरुक्तत्वादेव न साधन 'मिति । ननु–अधिकार्थं निगमनम्, प्रतिज्ञा हि केवलं साध्यनिर्देशः, प्रतिज्ञाहेतूदाहरणोपनयैर्येऽर्था अभिहितास्ते एकवाक्यतया निगम्यन्तेऽनेन, अतएव च निगमनमुच्यते अनेन चाबाधितत्वाशङ्का निरस्यत इति चेत् । नैवम् । यत् शङ्कावकाश-एव नास्ति; व्याप्तिपक्षधर्मतावचनाभ्यामेव पक्षे साध्यस्य निश्चयात् । नहि ताभ्यामप्यनिरस्यमाना शङ्काऽनेन वार्येत । तदिदमुत्प्रेक्षणं स्वगोष्ठ्यामेव शोभते । उक्तं च शान्तरक्षितेन–

' त्रिरूपहेतुनिर्देशसामर्थ्यादेव सिद्धितः ।
न विपर्ययशङ्काऽस्ति व्यर्थं निगमनं वचः ॥ ' इति ।

( तत्वसं·प–४२१ )

14-28 **अग्न्यादौ साध्य** इति । दृश्ये अग्न्यादौ साध्ये दृश्यो धूमादिरिति यावत् । अग्नौ सति धूमो दृश्यते, असति न दृश्यते, यदि धूमो नाग्नेः कार्यं, असत्यग्नावुपलभ्येत, नचोपलभ्यते, तस्मात् प्रत्यक्षानुपलब्ध्या अग्नेः कार्यं धूम इति निश्चीयत इति भावः । **चक्षुरादौ साध्य** इति । चक्षुरादेरदृश्यत्वेन प्रत्यक्षानुपलम्भस्यासंभवात् कादाचित्कत्वेन रूपादिज्ञानस्य चक्षुरादिकार्यत्वं निश्चीयते इति भावः ।

15-1 ननु–सम्बद्धयोरेव नियमः, नासम्बद्धयोः, सम्बन्धश्च नापरस्तादात्म्यतदुत्पत्तिभ्याम्, तत् कारणं कार्येणानुमीयेत, स्वभावेन वा तादात्म्यलक्षणेन तदात्माऽनुमीयेत । अथ कथं रसात् रूपानुमानम्, नहि तयोः कार्यकारणभावः, न च रूपात्मा रस इति परेषामाशङ्कायामुच्यते–**एकसामग्र्यधीनत्वेन भवति रसेन रूपानुमानमिति** । तदिदमुदाहरति–**रूपादावित्यादिना** । एकसामग्र्यधीनत्वमुपपादयति–**अत्रेत्यादिना** । **पूर्वक**मिति । अव्यवहितपूर्वकमित्यर्थः । पूर्वपूर्वरूपादुत्तरोत्तररूपोत्पत्तिरिति यावत् ।

15–3 **पूर्वपुञ्जादुत्तरपुञ्जोत्पत्ता**विति । अयमाशयः–न काणादाद्यभिमतोऽवयवावयिभावः सौगतसंमतः, नवाऽवयवरूपमवयविरूपे अवयवरसोऽवयविरसे कारणमिति । नापि रूपरूपिभेदः । किन्तु–पूर्वपूर्वरूपादिलक्षणात्पुञ्जादुत्तरोत्तररूपादिलक्षणपुञ्जान्तरोत्पत्तिः, तत्रोत्तररूपापेक्षया पूर्वपूर्वत्वं रसस्यापि तुल्यम् । अथापि उत्तरोत्तररूपाणां पूर्वपूर्वरूपसन्तानतैव, तथा रसानाम् रससन्तानतैव, तथा च स्वसन्तानापेक्षया उत्तरस्य स्वयमेवोपादानम्, तस्मिन् रूपसन्तानलक्षणे पुञ्जे पूर्वरसः सहकारिकारणमिष्यते उत्तरपुञ्जे रसानुभवात् । एवं रससन्ताने पूर्वरूपं सहकारिकारणम् । एवं च सति रूपसामग्री रसघटिता रससामग्री रूपघटिता, उपादाननिमित्तभावे तु विनिमयः, तत् रसे समुपलभ्यमाने तत्सामग्रीसाध्यं रूपमनुमीयेतैवेति ।

15-9 अथ स्वभावं लिङ्गं निरूपयति––**स्वभाव** इत्यादिना । **स्वसत्तामात्रभाविनी**ति स्वं– हेतुः, हेतोर्या सत्ता तयैव भवितुं शीलं यस्य स स्वसत्तामात्रभावी, तस्मिन् साध्ये

स हेतुः स्वभाव उच्यते । शिंशुपासत्तामपेक्ष्यैव वृक्षसत्ता, न ततोऽन्यदपेक्षते वृक्षः स्वभवने । सोऽयं स्वसत्तामात्रभावी । तस्मिन् साध्ये स्वभावो हेतुरुच्यते इति संबन्धः । उदाहरति—**यथेत्यादिना** ।

15-14 शङ्कते—**नन्विति** । एकत्वे—अभेद इत्यर्थः । **प्रतिज्ञातार्थैकदेशत्वा**दिति । प्रतिज्ञातः—साध्यतयाऽभिमतो योऽर्थो वृक्षः, तदेकदेशत्वात्—तेष्वन्यतमत्वादित्यर्थः । अयमाशयः—साधनेन ह्यवगतेन भाव्यम्, साधनतया विवक्षिता शिंशुपा पत्रशाखादिविशेषसंस्थानलक्षणा चेदवगता, अवगत एव स वृक्ष इति सिद्धस्य कथं साध्यतेति । परिहरति-**नेति** । मूढं प्रति स्वभावहेतुरुपयुज्यत इत्येतत् । आह च धर्मोत्तराचार्यः—' प्रचुरशिंशुपे देशेऽविदितशिंशुपाव्यवहारो जडः केनचिदुच्चां शिंशुपामुपदर्श्योच्यते वृक्षोऽयमिति, तदाऽसौ जाड्याच्छिंशुपाया उच्चत्वमपि वृक्षव्यवहारनिमित्तमवस्यति । तदा यामेवानुच्चां शिंशुपां पश्यति तामेवावृक्षमवस्यति । तदा स मूढः शिंशुपात्वमात्रनिमित्ते वृक्षव्यवहारे प्रवर्त्यते ' इति । ( न्यायबिं. टी. २८ )

15-19 अनुपलब्धिलिङ्गं निरूपयति—**अनुपलब्धिर्यथेति** । **उपलब्धिलक्षणप्राप्तस्येति** । उपलब्धिः—ज्ञानम्, तस्या लक्षणम्—सामग्री, तत्र प्राप्तः, जनकतया सामग्र्यनुप्रविष्टः । दृश्य इति यावत् । विषयोऽपि ज्ञानसामग्र्यन्तर्भूतः । शङ्कते—**नन्विति** । दृश्यता-दृशिगोचरता । दृश्यति न दृशिगोचरत्वं विवक्षितम्, अपि तु दृशिगोचरत्वेन संभाव्यमानत्वमेव । तदेवोपलब्धिलक्षणप्राप्तमित्युच्यते इत्यभिप्रायेण समाधत्ते—**एकेन्द्रिये**त्यादिना । घटस्तदाश्रयः प्रदेशश्चैकेन्द्रियग्राह्यौ, सति घटे आश्रयेण सहैव सोऽप्युपलभ्येत, यदि नोपलभ्यते दर्शनयोग्यस्यापि तस्य न दृशिगोचरतेत्येतददर्शनमनुपलब्धिरुच्यते, सेयमनुपलब्धिर्घटाभावे लिङ्गं भवतीत्यर्थः । **उपलम्भप्रत्ययान्तरे**ति । प्रत्ययः कारणम्, उपलम्भस्य यानि प्रत्ययान्तराणि—आलम्बनादन्यानि कारणानि इन्द्रियादीनि तत्साकल्यात् ।

15-24 अनुपलब्धिशब्देन विवक्षितमर्थमाह—**सचे**त्यादिना । सच—अनुपलब्धिशब्दवाच्यो हेतुश्च । चस्त्वर्थे । **एकज्ञानसंसर्गी**ति । इन्द्रियप्रणिधानयोग्यं प्रदेशतदाश्रयवस्तुद्वयमन्योन्यसापेक्षमेकज्ञानसंसर्गीत्युच्यते, तयोर्मध्ये य एकः पदार्थः प्रदेशविशेषः, स केवलमुपलभ्यमानः, तस्मात् तदुपलम्भाच्चेत्यर्थः । **कर्मकर्तृभावेनेति** । विविक्तः प्रदेश आलम्बनभूतः कर्मोच्यते, उपलम्भस्तत्प्रकाशकत्वात् कर्तृ उच्यते । तदिदमुभयमिहानुपलब्धिशब्देन विवक्षितमिति भावः । उपलब्धिनिवृत्तिमात्रपरत्वे असाधकतामाह—**न त्वित्यादिना** । **तद्धि स्वयमेवेति** । ज्ञानाभावमात्रं हि असत्यां ज्ञानसामग्र्यामस्त्येवेत्यर्थः । **न किञ्चिदिति** । अकिञ्चित्करमित्यर्थः । पर्युदासवृत्त्याश्रयणेन अन्यस्य यस्यकस्यचित् ज्ञानमनुपलम्भशब्दार्थतया न ग्राह्यमित्याह—**नापीत्ति** । अनुपलब्धिशब्दार्थमुपसंहरति—**तस्मादिति** । **विशिष्टमेवेति** । इतरव्यावृत्तमित्यर्थः—विविक्तः प्रदेशविशेषः, तज्ज्ञानविशेषश्च, न तु यः कश्चन प्रदेशो यत्किञ्चिद् ज्ञानमिति भावः । उक्तं च धर्मोत्तराचार्येण—'तस्मात् स एव घटविविक्तप्रदेशस्तदालम्बनं च ज्ञानं दृश्यानुपलम्भनिश्चयहेतुत्वाद् दृश्यानुपलम्भ उच्यते' इति । (न्यायबिं. टी. २६)सेयमनुपलब्धिर्नाभावे लिङ्गम्, अपित्वभावव्यवहारे इत्याह—

**अतएवे**त्यादिना । अभावे प्रत्यक्षेणावगम्यमाने तद्व्यवहारोऽपि तेनैव भवेदिति तस्य वा कुतः साधनापेक्षा, तत्राह—**मूढं प्रती**त्यादि ।

16-7 अनुपलब्धेर्लिङ्गस्य साध्यस्यासद्व्यवहारयोग्यत्वस्य च संबन्धं निरूपयति—**अनुपलम्भस्ये**त्यादिना । **कर्मधर्मपक्ष** इति । पर्युदासवृत्त्याऽनुपलब्धिशब्दार्थविवेचनावसरे विविक्तप्रदेशविशेषस्योपलम्भकर्मतया तज्ज्ञानस्य तत्प्रकाशकस्य कर्तृतया चानुपलब्धिपदार्थत्वमुक्तम् । तमिमं भेदमभिप्रेत्य कर्मधर्मपक्षे स्वभावं संबन्धं कर्तृधर्मपक्षे कार्यत्वं संबन्धं चोपपादयति—**तथाही**त्यादिना । **ज्ञानं तु प्रदेशस्य कार्यमिति** । आलम्बनस्य ज्ञाने कारणत्वात् । आशङ्कते **नन्विति** । परिहरति—**प्रतिषेधसाधनाद्भेद** इति । अत्राप्तसंवादं प्रमाणयति—**यथोक्त**मिति । आचार्यधर्मकीर्तिनेत्येतत् ।

16-14 उपलब्धिलक्षणप्राप्तस्येत्यस्य प्रयोजनमाह—**उपलब्धी**ति । देशतः कालतः स्वभावतो वा यो विप्रकृष्टः स हि नोपलब्धिलक्षणप्राप्तः, अतो न तदभावग्रहो भवेदुक्तानुपलब्ध्यभावादिति भावः ।

16-17 इयं चानुपलब्धिर्वर्तमानकाल इवातीतकालेऽपि जातु प्रमाणम्, भविष्यत्काले तु नैव प्रमाणमित्याह—**इयं चे**त्यादिना ।

16-19 यदाह—**न्यायवादी**ति । इदं च ‘ अमूढस्मृतिसंस्कारस्ये’त्यादि ‘ साधिनी ’ त्यन्तं वचनमाचार्यधर्मकीर्तिना न्यायविन्दावुक्तम् । (न्याय वि. १०९) अयमस्यार्थः—अमूढः अभ्रष्टः स्मृतिजनकः संस्कारो यस्मिन् घटादावर्थे सोऽयममूढस्मृतिसंस्कारः, एवम्भूतस्यातीतस्य, तथा वर्तमानस्य च प्रतिपत्तृप्रत्यक्षस्य—प्रतिपत्तुः प्रत्यक्षो घटादिरर्थः; तस्य निवृत्तिरनुपलब्धिरभावव्यवहारसाधिनीति । न्यायबिन्दुटीकायां चेदं वचनं विस्तरेण व्याख्यातम् । ( न्याय वि. टी. ३३ )

16-23 अनुपलब्धेः प्रकारभेदान्निरूपयति—**तत्रत्या**दिना । अत्रेति धर्मिनिर्देशः । नास्ति धूम इति साध्यनिर्देशः । स्वभावानुपलब्धेर्विविक्तप्रदेशतदुपलंभरूपत्वेन प्रदेशोपलम्भेनैवाभावोऽप्युलब्ध इति नाभावस्य साध्यता । अपित्वभावव्यवहारयोग्यत्वस्यैव । उक्तंचेदं प्राक् । अन्यत्र कार्यानुपलब्ध्यादावभावस्य तद्व्यवहारस्य च साध्यता । १ ।

16-25 **कार्यानुपलब्धिर्यथे**ति । प्रतिषेध्यस्य यत्कार्यं तस्यानुपलब्धिरित्यर्थः । **धूमाभावा**दिति । यद्यप्यभावो लिङ्गम्, अथाप्यनुपलब्धिगम्यः स कार्याभाव इत्यनुपलब्धिविशेषेषु निरूपितः । सर्वं एते कार्यानुपलब्ध्यादयः स्वभावहेतावेव समावेशमर्हन्ति, अथापि प्रयोगवैचित्र्यात्तु प्रपञ्चोऽयम् । वक्ष्यति च स्वयम्—एते चेत्यादिना । प्रयुक्तिभेदेन परं भेद इति । दृश्यानुपलब्धेर्यत्रैवासंभवस्तत्रैव कार्यानुब्धिराश्रयणीया, अन्यथा तत एव तत्सिद्धेः । अत्र च धूमकारणस्य व्यवहितत्वेनादृश्यतया कार्यानुपलम्भो भवति लिङ्गम् । सत्यपि कारणे प्रतिबन्धवशात्कार्यानुपलम्भो घटेत, अत उक्तम**प्रतिबद्धसामर्थ्यानी**ति । २ ।

16-27 **कारणानुपलब्धिर्यथे**ति । निषेध्यस्य धूमस्य यत्कारणं दहनस्तस्यानुपलब्धेरिदं साध्यते—**नात्र धूमो दहनाभावा**दिति । ननु दहनश्चेद् दृश्येत तत्प्रभवो धूमोऽपि दृश्येतैव,

यदि स नोपलभ्यते सोऽपीति दृश्यानुपलम्भेनैव धूमाभावस्यापि निश्चयसंभवात् किमिति तत्साधनप्रसङ्गः। उच्यते–विरलतमसि प्रभातसमये ह्रदे हेमन्तसमये अधिसलिलं परितः प्रसृतं बाष्पमवलोक्य धूमोऽयतिसन्दिहानः, दहनमपश्यन् कारणानुपलम्भादनुमानेनाध्यवस्यति। दहनो हि प्रज्वलनस्वभावः सति समुपलभ्येतैव, अनुपलम्भात्तदभावः प्रत्यक्षावगतः। ३।

16-29 व्यापकानुपलब्धिमुदाहरति—**व्यापकानुपलब्धिर्यथेति**। प्रतिषेध्यस्य यो व्यापकस्तस्यानुपलब्धिरित्यर्थः। इयं चानुपलब्धिरवगतवृक्षसामान्यस्यानवगतशिंशुपाविशेषस्य शिंशुपाभावसाधने भवति लिङ्गम्। यस्तु अवगतशिंशुपाविशेषः तस्य तु दृश्यानुपलब्ध्यैव तदभावः सिध्यति। ४।

17-2 **स्वभावविरुद्धोपलब्धिर्यथेति**। प्रतिषेध्यस्य यः स्वभावः, तद्विरुद्धोपलब्धिरित्यर्थः। ननूपलम्भः कथमनुपलब्धेः प्रकारभेदो भवितुमर्हति। उच्यते। न यस्य कस्यचिदुपलम्भः, अपितु निषेध्यस्वभावविरुद्धस्वभावस्य, नञा चाभाव इव विरोधोऽपि गम्यते। दृश्यानुपलम्भश्च पर्युदासवृत्त्या विविक्तप्रदेशोपलम्भे पर्यवस्यति, एवं विरुद्धस्वभावोपलम्भेऽपि। इयं च विरुद्धोपलब्धिरसन्निकृष्टे शीते, सन्निकृष्टे तु दृश्यानुपलब्धिरेव। वह्निर्दूरादपि रूपविशेषप्रकाशाद् भवति दृश्यः, स्पर्शस्तु व्यवधानान्न दर्शियोग्यः। ५।

17-5 **कार्यविरुद्धोपलब्धिर्यथेति**। प्रतिषेध्यस्य यत् कार्यं तद्विरुद्धस्योपलब्धिरित्यर्थः। **अन्त्यदशाप्राप्तमेवेति**। सर्वषां क्षणिकत्वेन कारणसन्तानेषु पूर्वपूर्वेषु न सर्वमेव कार्योत्पादनसमर्थम्, तथा सति पूर्वपूर्वसमय एव कार्योत्पादप्रसङ्गात् तस्मात् पूर्वपूर्वक्षणात्मनि कारणसन्ताने यदन्तिमक्षणात्मकं कार्यादव्यहितपूर्वक्षणरूपं तदेवाप्रतिबद्धसामर्थ्यमित्याशयः। ६।

17-7 **कारणविरुद्धोपलब्धिर्यथेति**। निषेध्यस्य यत् कारणं तद्विरुद्धस्योपलब्धिरित्यर्थः। **नास्येत्**यादिना। अस्येति पुरुषविशेषो धर्मी। रोमहर्षादिविशेषाभावः साध्यम्, आदिशब्दाद् दन्तवीणादिकं ग्राह्यम्, सन्निहितदहनविशेषत्वादिति हेतुः। सन्निहितो दहनविशेषो यस्येति बहुव्रीहिः। विशेषशब्दः प्रभूतपरः, तद्ग्रहणादत्यल्पानां शीताविरोधिनां दीपादीनां व्यावृत्तिः। यदा दूरात्पश्यति पुरुषं वह्निं च तत्रायं प्रयोगो भवति। तदा हि रोमहर्षादि नोपलम्भयोग्यम्, नापि शीतम्, कारणविरुद्धमात्रोपलम्भात् कार्याभावोऽनुमीयते। सन्निहिते तु पुरुषे उपलम्भयोग्यस्यापि रोमहर्षादिविशेषस्यानुपलम्भाद् दृश्यानुपलब्ध्यैव तदभावः सिध्येत्। तथोपलम्भयोग्यस्य शीतस्यानुपलब्ध्या कारणानुपलब्ध्यैव तस्य सिद्धिः स्यात्। ७।

17-10 **व्यापकविरुद्धोपलब्धिर्यथेति**–प्रतिषेध्यस्य यो व्यापकः, तद्विरुद्धस्योपलब्धिरित्यर्थः। उदाहरति–**नात्र तुषारस्पर्शो दहना**दिति। तुषारस्पर्शो यदा नोपलम्भयोग्यो नापि शीतं तत्र वह्निमात्रोपलम्भाद्भवत्ययं हेतुः। अन्यथा तु स्वभावानुपलब्धिः व्यापकानुपलब्धिर्वा स्यात्। ८।

17-12 **स्वभावविरुद्धकार्योपलब्धिर्यथेति** । प्रतिषेध्यस्य यः स्वभावः तस्य यो विरुद्धस्तस्य यत् कार्यं तस्योपलब्धिरित्यर्थः । उदाहरति–**नात्र तुषारस्पर्शो धूमादिति** । दूराद्धर्मिणि धूममात्रं पश्यतस्तुषारस्पर्शाभावप्रतिपत्तौ भवति हेतुरयम् । स्वभावे उपलम्भयोग्येऽनुपलभ्यमाने तु स्वभावानुपलब्ध्यैव प्रतिषेधः सिध्येत् तद्विरुद्धे चोपलभ्यमाने विरुद्धोपलम्भादेव प्रतिषेधः सिध्येत् । ९ ।

17-15 **कार्यविरुद्धे**ति । प्रतिषेध्यस्य यत् कार्यं तस्य यो विरुद्धस्तस्य यत् कार्यं तस्योपलब्धिरित्यर्थः । उदाहरति–**नेहेति** । शीतकारणानां तत्कार्यस्य शीतस्य तद्विरुद्धस्य वह्नेश्च यदा नोपलम्भयोग्यता तदाऽयं हेतुः । अन्यथा तु स्वभावे उपलम्भयोग्येऽनुपलभ्यमाने स्वभावानुपलब्ध्यैव प्रतिषेधः सिध्येत् । कार्ये उपलम्भयोग्येऽनुपलभ्यमाने कार्यानुपलम्भादेव तत्प्रतिषेधः सिध्येत् । कार्यविरुद्धे तूपलभ्यमाने कार्यविरुद्धोपलम्भादेव प्रतिषेधः सिध्येत् । १० ।

17-18 **कारणविरुद्धकार्योपलब्धिर्यथे**ति । प्रतिषेध्यस्य यत् कारणं तस्य यो विरुद्धः, तस्य यत् कार्यं तस्योपलब्धेरित्यर्थः उदाहरति–**न रोमहर्षादी**ति । प्रतिषेध्ये रोमहर्षादौ तत्कारणे कारणविरुद्धे चोपलम्भायोग्ये भवत्ययं हेतुः । अन्यथा तु–स्वभावे, कारणे वा उपलम्भयोग्येऽनुपलभ्यमाने स्वभावानुपलब्ध्या कारणानुपलब्ध्या वा कारणविरुद्धे उपलभ्यमाने कारणविरुद्धोपलम्भेन वा प्रतिषेधः सिध्येत् । ११ ।

17-21 **व्यापकविरुद्धकार्योपलब्धिरि**ति । प्रतिषेध्यस्य यद् व्यापकं तस्य यद्विरुद्धं तस्य यत्कार्यं तदुपलब्धिरित्यर्थः । उदाहरति–**नात्रे**ति । दूरादेव धूममात्रं पश्यतस्तेन भवति नात्र तुषारस्पर्श इति तत्प्रतिषेधानुमानम् । तुषारस्पर्शे तद्व्यापके शीते वोपलम्भयोग्येऽनुपलभ्यमाने तद्विरुद्धे वह्नौ वोपलभ्यमाने स्वभावानुपलब्धिर्व्यापकानुपलब्धिः व्यापकविरुद्धोपलब्धिर्वा स्यात् । १२ ।

17-23 **स्वभावविरुद्धव्याप्तोपलब्धिर्यथे**ति । प्रतिषेध्यस्य यः स्वभावः तस्य यो विरुद्धस्तस्य यद्व्याप्तं तस्योपलब्धिरित्यर्थः । उदाहरति–**नात्रे**ति । तुषारस्पर्शमात्रमनुभूयमानं वह्निप्रतिषेधे लिङ्गम् । अन्यथा स्वभावे उपलम्भयोग्येऽनुपलभ्यमाने स्वभावानुपलब्धिः स्यात् । उपलभ्यमाने तु शीते स्वभावविरुद्धोपलब्धिः स्यात् । १३ ।

17-25 **कार्यविरुद्धव्याप्तोपलब्धिरि**ति । प्रतिषेध्यस्य यत् कार्यं तस्य यद्विरुद्धं तस्य यद्व्याप्तं तस्योपलब्धिरित्यर्थः । उदाहरति–**नेहे**ति । वह्निकारणे उपलम्भयोग्येऽनुपलभ्यमाने तु स्वभावानुपलब्धिः स्यात् । कार्ये वह्नावुपलम्भयोग्येऽनुपलभ्यमाने तु कार्यानुपलब्धिः स्यात् तद्विरुद्धे शीते उपलभ्यमाने कार्यविरुद्धोपलब्धिरेव लिङ्गं स्यात्, शीतव्याप्यं तुषारमात्रमनुभूयते इति कार्यविरुद्धव्याप्तोपलब्धिलिङ्गम् । १४ ।

17-28 **कारणविरुद्धव्याप्तोपलब्धिरि**ति । प्रतिषेध्यस्य यत् कारणं तस्य यत् विरुद्धं तस्य यद्व्याप्यं तदुपलब्धिरित्यर्थः । उदाहरति–**नात्र धूम** इति । धूमस्वभावे उपलम्भयोग्येऽनुपलभ्यमाने स्वभावानुपलब्धिः, कारणे योग्येऽनुपलभ्यमाने कारणानुप-

लब्धिः स्यात्। कारणविरुद्धे तूपलभ्यमाने कारणविरुद्धोपलब्धिः स्यात्। इह तु कारणविरुद्धव्याप्ततुषारमात्रमनुभूयत इति तेन धूमप्रतिषेधात् कारणविरुद्धव्याप्तोपलब्धेर्भवति कार्यप्रतिषेधः। १९।

18-1 **व्यापकविरुद्धव्याप्तोपलब्धिर्यथेति**। प्रतिषेध्यस्य यद्व्यापकं तस्य यद्विरुद्धं तस्य यद्व्याप्तं तस्योपलब्धिरित्यर्थः। उदाहरति—**नायं नित्य** इति। यदि व्यापकविरुद्धमुपलभ्येत व्यापकविरुद्धोपलम्भादेव प्रतिषेधः सिध्येत्। इह तु तद्विरुद्धव्याप्तोपलम्भात् व्यापकप्रतिषेध इति विशेषः। १६।

**एतेचेति** व्याख्यातप्रायम्। स्वभावानुपलब्धेरन्येषां विशेषमाह—**अत्रेत्यादिना**। इदमपि व्याख्यातप्रायम्।

इति स्वार्थानुमानपरिच्छेदः

---

# तृतीयः परार्थानुमानपरिच्छेदः ।

19-1 परार्थानुमानं निरूपयति—**त्रिरूपेति** । त्रिरूपलिङ्गाख्यानमिति पदं व्याचष्टे—**अन्वयेति** । अन्वयः सपक्षे सत्त्वम् । व्यतिरेको विपक्षेऽसत्त्वम् । आख्यायतेऽनेनेत्याख्यानमिति करणे व्युत्पत्तिमभिप्रेत्य व्याचष्टे—**येन वचनेनेति** । **उपचारादिति** । कारणे कार्योपचारादित्यर्थः । शब्दाद् भवति त्रिरूपलिङ्गप्रतिपत्तिः; तेन च भवत्यनुमानम् । अतः परम्परया भवति वाक्यमनुमाने कारणम् । ननु उपचारादन्यदपि यत्किञ्चित् परार्थानुमानमस्तु, विचार्यतां च तदपि । मैवम् । अनुमाने यन्निमित्तं तदेव तु विचार्यं, तच्च त्रिरूपं लिङ्गं, तस्य स्वरूपं स्वार्थानुमाने विचारितं, इह तु तद्बोधकं वाक्यं विचार्यते, अतो न यस्य कस्यापीह विचारावसरः । तस्य द्वैविध्यमाह—**तद् द्विविध**मित्यादिना । साध्यधर्मी पक्षः । दृष्टान्तधर्मी महानसः, तयोर्हेतुमत्तया साधर्म्यं, यो धूमवान् सोऽग्निमान् यथा महानसः, धूमवांश्चायमित्यनेन साधनवाक्येन गम्यते, तदिदं साधर्म्यवत् साधनवाक्यम् । हेत्वसत्ताकृतं वैधर्म्यं—यो निरग्निः स निर्धूमः, धूमवांश्चायमित्यनेन गम्यते, तदिदं वैधर्म्यवत् साधनवाक्यम् ।

19-7 तत्र साधर्म्यवन्तं प्रयोगमुदाहरति—**तत्रेत्यादिना** । **साधर्म्यवन्तं प्रयोगं प्रदर्शयितु**मिति । इयं वाक्यशैली प्रामादिकीति प्रतिभाति । न हि भगवान् प्रयोगभेदनिरूपणाय प्रवृत्तः, अपि तु सर्वस्य क्षणिकतां समर्थयितुं, इदं च स्वभावहेतोः साधर्म्यवतः प्रयोगस्योदाहरणं भवितुमर्हति, नापि सौत्रान्तिकमतमाश्रित्य भगवतेदमुक्तम् । सौत्रान्तिकप्रभेदो हि भगवतः समनन्तरकालभावी । सौत्रान्तिकं मतमाश्रित्येत्यनेन बोध्यं त्वेतावत् सर्वास्तित्ववादाश्रयणेनेति । ज्ञानमात्रास्तित्वे तु सर्वमिति निर्देशो नातीव स्वरसः । यद्वा—साधर्म्यवन्तं प्रयोगं प्रदर्शयितुं सौत्रान्तिकमतमाश्रित्य व्युत्पाद्यते इत्यन्वयः । किं व्युत्पाद्यते, तत्राह—**भगवता यदुक्त**मित्यादि । यत् संस्कृतं तत् क्षणिकं, संस्कृतं चेदं सर्वमिति तु भगवद्वचनाशयः। तदेतद् भगवद्वचनं व्याख्यातुमारभते—**तद् व्युत्पाद्यते** इति। समित्युपसर्गेण विवक्षितमर्थमाह—**संभूय हेतुभिरिति** । हेतवो यावन्न समवयन्ति, तावन्न कार्यनिष्पत्तिः, समवेतैस्तु तैस्तन्निष्पत्तिः । त एते समवेता हेतवः प्रत्यया उच्यन्त इत्यभिप्रेत्याह—**प्रत्ययैरिति** । हेतुं हेतुं प्रति अयन्ते हेत्वन्तराणीति तेषामयमानानां यो भावः स प्रत्यय उच्यते । समवेता हेतव इति यावत् । संस्कृतस्यैष स्वभावः क्षणिकता, यथा शिंशुपायाः स्वभावो वृक्षता । अतश्चायं स्वभावहेतुः । स्वभावहेतोरस्य क्षणप्रभायां साधर्म्यं बोध्यम् । तत्रापि क्षणिकत्वं नेति परेषां वादस्तु प्रत्यक्षोपहतः । सौगतंमन्याः वात्सीपुत्रीयाः पुनः बुद्धिशब्दादीनां क्षणिकत्वं घटादीनामक्षणिकत्वं चाभ्युपगच्छन्ति । तान् प्रत्येष प्रयोगः – बुद्धिशब्दादय इव सर्वमेव क्षणिकम् संस्कृतत्वादिति । क्षणिकमित्येतद् व्याचष्टे—**उत्पत्तिक्षण एवेति** उत्पत्तिक्षणमात्रस्थायिता क्षणिकत्वमिति यावत् ।

19-11 ननु कथं क्षणिकत्वं घटादीनां तिष्ठन्ति खलु ते समुत्पन्ना उत्पत्त्यनन्तरमपीतिशङ्कां निरस्यन्नाह—**सर्वं तावदित्यादिना** । अयमाशयः—स्वहेतुभिरुत्पद्यमानोऽयं घटादिर्विनश्वरस्वभाव उत्पाद्यते किमविनश्वरस्वभावः, अविनश्वरस्वभावश्चेन्न मुद्गराद्यभिघातेऽपि तस्य नाशो भवेत् । अथ विनश्वरस्वभाव एव चेदुत्पाद्यते, उत्पत्त्यनन्तरं तेन

विनश्यता भाव्यमिति। ननु नाविनश्वरस्वभावा न वा विनश्वरस्वभावा उत्पद्यन्ते किन्तु कियन्तं कालं स्थितिस्वभावा उत्पाद्यन्ते इत्याशङ्कामनूद्य निरस्यति—**अथेदृश एव स्वभाव** इति। **मुद्गरादिसन्निधानकालेऽप्येष एव स्वभाव** इति। अयमाशयः—कियन्तं कालं स्थित्वेति या किल मर्यादा कल्प्यते सेयमनियतेति पुनरपि तावन्तं कालं कुतोऽयं न तिष्ठेत् स्वभावानियतेरनवस्थितेरिति। क्षणद्वयस्थायित्ववादिनोऽप्येषैवा-नवस्थेत्याशयेनाह—**तस्मादि**ति।

19-19 उत्पादकसामग्री स्थिरस्वभावमेवोत्पादयति, नाशकसामग्री तु ततोऽपि प्रबला विनाशयतीत्यभिप्रायेणाशङ्कते—**स्यादेतदि**त्यादिना। निरस्यति-**तदसदि**त्यादिना। अयमाशयः—स्थिरस्वभावमेव वस्तु नश्यतीत्यनुपपन्नम्। न ह्येकस्वभावं वस्तु तद्विरुद्ध-स्वभावतां प्राप्नुयात्। तस्मादुत्पादकाद्विनाशकस्य प्राबल्यमित्येषा कल्पना नोपपद्येतेति।

ननु—कोऽयं विकल्पः, किं स्थिरस्वभाव उत्पद्यते उतास्थिरस्वभाव इति। कार्यं कारणसापेक्षं, घटादिकार्यं यथा स्वोत्पत्तौ कारणसापेक्षं, तथा नाशाख्यं कार्यं स्वोत्पत्तौ कारणसापेक्षम्। तस्मात् नाशकसमवधाने नाशो जायते नोचेन्नेति कथं क्षणभङ्ग-प्रसाधनमितिचेत्। उच्यते। सत्यं कार्यं कारणसापेक्षमिति। कार्यकारणभावस्तु भावयोरेव, न च विनाशो नाम किमपि वस्तु। अवस्तुनोऽभावस्य का नाम कारणापेक्षा। उत्पादकाद्भवति वस्तुन उत्पत्तिः, उत्पन्नं सपदि स्वयमेव निवर्तते। उक्तं च शान्तरक्षितेन—

"तत्र ये कृतका भावास्ते सर्वे क्षणभङ्गिनः।
विनाशं प्रति सर्वेषामनपेक्षतया स्थितेः॥
यद्भावं प्रति यन्नैव हेत्वन्तरमपेक्षते।
तत्तत्र नियतं ज्ञेयं स्वहेतुभ्यस्तथोदयात्॥
निर्निबन्धा हि सामग्री स्वकार्योत्पादने यथा।
विनाशं प्रति सर्वेऽपि निरपेक्षाश्च जन्मिनः॥"

(तत्त्वसं. १३२)

आह च कमलशीलः—'भावस्य हि करणं भवति, नाभावस्य, निमित्तीकर्तव्य-सकलस्वभावविरहलक्षणत्वान्न किञ्चिदुत्पाद्यं रूपमस्ति। अतो भावाभावात्मकः—भावनिषेधात्मको नाशो न केनचित् क्रियते अवस्तुत्वात् खरविषाणवत्' इति।

(तत्त्वसं. पं. १३९)

मुद्गरादिसंनिधाने तु कपालादिविसजातीयसन्तानारम्भः, अतश्च स्थूलो निरोध उच्यते।

19-28 विनश्वरस्वभावस्य क्षणिकतां प्रयोगेण साधयन्नाह—**प्रयोगः पुनरयं कर्तव्य** इति। **यथाऽन्त्यक्षणवर्ती**ति। कपालादिविसजातीयसन्तानोत्पादकमुद्गरादिसंनिधिक्षणोऽन्त्य-क्षण उच्यते।

20-2 भावानां क्षणिकत्वे प्रत्यभिज्ञाविरोधमाशङ्कते—**यदीति**। परिहरति—**निरन्तरसदृशे-**त्यादिना। निरन्तरेत्युत्पादविशेषणम्। सादृश्यं च पूर्वपूर्वापेक्षया। उत्पादे नैरन्तर्यं अपरेषु पूर्वसादृश्यं च विशदयन्नाह—**पूर्वक्षणविनाशकालएव तत्सदृशं क्षणान्तरमुदयत** इति। घटात्मको यः पूर्वक्षणः तद्विनाशकाल एव तत्सदृशं घटात्मकं क्षणान्तरमुदयत इत्यर्थः। विनाशकाल एवेत्यवधारणात् पूर्वापरयोरव्यवधानं गम्यते। **अभावेनाव्यवधा-नादिति**। पूर्वघटक्षणविनाशापरघटक्षणयोर्मध्ये घटक्षणशून्यः समयविशेषो नास्तीति भावः। यदि स्यात्तदा भेदग्रहः पूर्वापरयोर्जातु गृह्येतापि, व्यवधानाभावादभेदभ्रम-स्यावसर इति। सादृश्यं नैरन्तर्यं चाभेदाध्यवसाये कारणमिति भावः। तदेतन्निरूपयति—**तेनाकारविलक्षणत्वाभावादभावेनाव्यवधानाच्चेति** अभावेन व्यवधानाभावादित्यर्थः। **प्रत्यय** इति। भ्रमात्मकः प्रत्यय इत्यर्थः। अभेदभ्रमे निदर्शनं प्रदर्शयति—**अत्यन्तभिन्ने-ष्वपीति**। व्यक्तभेदेष्वपीति यावत्। **इहापीति**। अव्यक्तभेदे इह तु किंपुनर्न्याय-सिद्धोऽभेदभ्रम इति भावः।

20-8 **निर्विशेषणस्य स्वभावहेतोरयं प्रयोग** इति। संस्कृतत्वं हि भावानां स्वभाव एव, निर्विशेषणता चास्य सविशेषणस्वभावहेतुविवेचनावसरे व्यक्तीभविष्यति। स्फुटप्रतिपत्तये प्रयोगान्तरं प्रदर्शयति—**तथाऽपरोऽपी**ति। **यत्सदिति**। सत्ता हि सर्वेषां स्वभावः। ननु—'यत्सत्तत्क्षणिकं' इति व्याप्तिर्न सिध्यति, आत्माकाशादयो हि नित्या भावाः सन्तीति परपक्षवासनामूलकां शङ्कां परिहरन् सर्वशब्देन क्रोडीकृतं विशदयति—**प्रमाणप्रतीताः पदार्था** इति। आत्मादिषु प्रमाणं नास्तीति ते शशशृङ्गायन्त इति भावः।

20-13 **सविशेषणप्रयोगो यथेति**। सविशेषणस्य स्वभावहेतोः प्रयोग इत्यर्थः। सविशेषण-तामुपपादयति—**अनुत्पन्नेभ्य** इत्यादिना।

अयमाशयः—यथा अगोव्यावृत्तो गौरित्युच्यते, अनीलव्यावृत्तो नील उच्यते एवमनुत्पन्नेभ्यो व्यावृत्तमात्रमुत्पन्नमित्युच्यते। उत्पत्तिरियमुत्पत्तिमांश्चायमिति न धर्मधर्मि-भेदः। व्यावृत्तिश्च व्यावृत्तस्य स्वभाव एव, व्यावृत्तान्नातिरिच्यते। सैव व्यावृत्तिः कल्पितं धर्मभेदमाश्रित्य नीलस्योत्पत्तिरिति अनीलव्यावृत्त्यात्मनो व्यवच्छेदेन व्यतिरिक्तेवोच्यते। तथेह शब्दस्योत्पत्तिरिति। तमिमं कल्पितं विशेष्यविशेषणभेदमाश्रित्य उत्पत्तिमत्त्वादिति हेतुरयं प्रयुक्त इति सविशेषणस्वभावहेतुरयं भवतीति।

20–17 शङ्कते—**नन्विति**। सर्वएव शब्दा अपोहमुखेनैव प्रवर्तन्ते। तत् सन्निति शब्दोऽपि असद्व्यावृत्तेऽसद्व्यावृत्त्या प्रवर्तते तत् सत्वादिति यः स्वभावहेतुः प्राक् प्रदर्शितः सोऽप्युत्पत्तिमत्त्वमिव सविशेषणहेतुर्भवितुमर्हतीति भावः।

परिहरति-**नैतदस्तीति**। **सत एवेति**। पूर्वस्मिन् 'यत्सत्तदनित्यं सन्तश्चामी भावा' इत्यस्मिन् प्रयोगे सदित्येव धर्मी निर्दिश्यते। सत्त्वं चास्य स्वभावः, नात्र सत्त्वेनासत्त्वव्यावृत्तिरूपेण कल्पितेन धर्मभेदेन किमपि विशेष्यते, येन सविशेषणतायाः प्रसङ्गः। इह तु यदुत्पत्तिमत्तदनित्यं, उत्पत्तिमांश्च शब्द इत्यत्र यदु-

त्पत्तिमदित्युत्पत्त्या विशेषितो धर्मी निर्दिश्यते अनुत्पत्तिव्यावृत्तिलक्षणयोत्पत्त्या विशेषितस्ततो व्यतिरिक्त इव धर्मी निर्दिश्यते। उत्पत्तिमांश्च शब्द इति शब्दस्य धर्मिणो धर्म इव समारोपितभेदा उत्पत्तिर्निर्दिश्यते। तदयं प्रयोगः सविशेषणस्वभावहेतुको भवितुमर्हति, यदि यदुत्पन्नं तदनित्यं, उत्पन्नाश्चामी भावा इति स्यात्प्रयोगः, तदा स्याद्वैषम्यमिति।

20-21 सविशेषणहेतुप्रयोगे प्रकारान्तरमाह—**भिन्नविशेषणस्येति**। भिन्नत्वं च स्वभावानन्तर्गतता। कृतकशब्दार्थमजानन् शङ्कते—**ननु चित्रगुरितीति**। देवदत्ताद्धर्मिणो बहिर्भूताश्चित्रा गावो विशेषणतया विवक्षिता इति भिन्नविशेषणता तत्र व्यक्तं गम्यते, कृतकमिति निर्देशस्तु कार्यमिति निर्देशादविशिष्टः कार्यस्वभावं कार्यतामेव गमयतीति कथं भिन्नविशेषणतेति भावः। परिहरति—**अपेक्षितेत्यादिना**। न कार्यशब्दवत् पर्यायः कृतकशब्दः, किन्तु परव्यापारसापेक्षस्वनिष्पत्तिकत्वलक्षणं स्वभावविशेषं बोधयति। इत्थं च चित्रगुशब्दवत् धर्मिस्वरूपानन्तर्गतपरव्यापारसापेक्षत्वस्य विशेषणस्यावबोधनात् भिन्नविशेषणस्वभावहेतोरयं प्रयोगो भवितुमर्हतीति भावः। आह च धर्मकीर्तिर्न्यायबिन्दौ—'यत्कृतकं तदनित्यमित्युपाधिभेदेन। अपेक्षितपरव्यापारो हि भावः कृतक' इति (न्या. बि. प. १०९)। व्याख्यातं चैतत् धर्मोत्तराचार्येण—'उपाधिभेदेन स्वभावस्य प्रयोग इति संबन्धः उपाधिर्विशेषणं, तस्य भेदेन भिन्नोपाधिना विशिष्टः स्वभावहेतुः प्रयुक्त इत्यर्थः। इह कदाचिच्छुद्ध एवार्थ उच्यते, कदाचिदव्यतिरिक्तेन विशेषणेन विशिष्टः, कदाचिद्व्यतिरिक्तेन। देवदत्त इति शुद्धः, लम्बकर्ण इत्यभिन्नकर्णद्वयविशिष्टः, चित्रगुरिति व्यतिरिक्तचित्रगवीविशिष्टः। तद्वत्सत्त्वं शुद्धं, उत्पत्तिमत्त्वमव्यतिरिक्तविशेषणं, कृतकत्वं व्यतिरिक्तविशेषणम् × × × × × यस्मादपेक्षितपरव्यापारः कृतक उच्यते तस्माद् व्यतिरिक्तेन विशेषणेन विशिष्टः स्वभावः उच्यते। यद्यपि व्यतिरिक्तं विशेषणपदं न प्रयुक्तं, तथाऽपि कृतकशब्देनैव व्यतिरिक्तं विशेषणमन्तर्भावितम्। अतएव संज्ञाप्रकारोऽयं कृतकशब्दः, यस्मात्संज्ञायामयं कन्प्रत्ययो विहितः।' इति (न्या. बि. टी. प. ३०)

20-27 अथापरं प्रकारमाह स्वभावहेतोः—**प्रयुक्तविशेषणस्येति**। भिन्नपदोपात्तविशेषणस्येति यावत्। विशेष्योपस्थापकेन कृतकपदेनैव विशेषणमप्युपस्थाप्यते। इह तु पदान्तरेण प्रत्ययभेदेत्यनेन।

21-2 तदिदं प्रयुक्तविशेषणत्वमुपपादयति—**प्रत्ययभेदशब्दस्य**त्यादिना। **स्वभावहेतुप्रदर्शनं चेति**। सविशेषणस्वभावहेतूनां त्रयाणां प्रदर्शनं चेत्यर्थः। स्वभावहेतुप्रपञ्चप्रदर्शनं चेति वाऽर्थः। **व्यामोहनिवृत्तय** इति। मन्दस्य नायं स्वभाव इति व्यामोहः स्यात्, तन्निवृत्तये इत्यर्थः। व्यामोहे कारणमनुवदंस्तन्निवृत्तिप्रकारमाह—**धर्मभेदकल्पनयाऽपि स्वभावहेतुरेव प्रसज्यत** इति। आह च धर्मोत्तराचार्यः—'तदेवं त्रिविधः स्वभावहेतुप्रयोगो दर्शितः, शुद्धोऽव्यतिरिक्तविशेषणो व्यतिरिक्तविशेषणश्चेति। एवमर्थं चैतदाख्यातम्। माभूद्वाचकभेदात्क्वचित्स्वभावहेतावपि प्रयुक्ते व्यामोह इति' इति (न्या. बि. टी. ३१).

21- 4 अथ स्वभावहेतोर्वैधर्म्यवन्तं प्रयोगमुदाहरति—**स्वभावहेतो**रित्यादिना। **यद्यदाऽनन्तरानवस्थायि न भवति न तद्विनश्वरस्वरू**पमिति । यद्विनश्वरस्वरूपं तदनन्तरानवस्थायि, यथाऽन्त्यक्षणवृत्तिघट इति स्वभावहेतोः साधर्म्यवानयं प्रयोगः, तस्यास्य वैधर्म्यवानयं प्रयोगः–' यद्यदाऽनन्तरानवस्थायि न भवतीति । **यथाऽऽकाश**मिति । इदं च निदर्शनं सर्वास्तित्ववादिभिः सौगतैकदेशिभिः संस्कृतासंस्कृतभेदेन संगृह्य द्वेधा विभक्ते आर्यसत्येऽसंस्कृतकोटौ आकाशप्रतिसंख्यानिरोधाप्रतिसंख्यानिरोधानां त्रयाणां गणनात् बोध्यम् । आकाशानभ्युपगमपक्षे तु शशशृङ्गादिनिदर्शनतुल्यं बोध्यम् । **व्यतिरेकप्रयोगे** इति । व्यतिरेकव्याप्तिप्रयोग इत्यर्थः । साध्याभावः–अन्वयेन सिषाधयिषितं यत्साध्यं, तस्याभावः, साधनाभावेन–अन्वयेन सिषाधयिषितं यत् साधनं तस्याभावेन, व्याप्तत्वात् व्याप्तिविशिष्टत्वात् । अन्वये साध्यव्याप्यं भवति साधनं, व्यतिरेके साधनाभावव्याप्यो भवति साध्याभावः । तथात्वात् स साध्याभावः साधनाभावे नियतः साधनाभाववतोऽन्यत्र नेत्येतत् । यथा स्वकर्मण्येव नियत इत्युक्ते स्वकर्मणोऽन्यत्रानन्वयो गम्यते तथा तेन साधनाभावे साध्याभावव्यापकता लभ्यते। तथा च व्यापकनिवृत्त्या व्याप्यनिवृत्तिः सिध्यतीति बोध्यम् ।

अनन्तरानवस्थायित्वाभावस्य यद्व्यापकमविनश्वरस्वरूपत्वं तद्रूपादिभ्यो निवर्तमानमनन्तरानवस्थायित्वाभावं तेभ्यो निवर्तयत् तेषामनन्तरानवस्थायितां साधयति—**तदेतत्प्रतिपादितं विनश्वररूपं च रूपादिकमुदयकाल** इति ।

21- 9 **यत्र क्षणिकत्वं नास्ती**ति । सत्त्वेन क्षणिकत्वे साध्ये वैधर्म्यप्रयोगोऽयं । अयं च शुद्धस्य स्वभावहेतोर्वैधर्म्यप्रयोगः । उत्पत्तिमत्त्वेनानित्यत्वे साध्ये वैधर्म्यप्रयोगं प्रदर्शयति–**यत्रानित्यत्वं निवृत्तं तत्रोत्पत्तिमत्त्वमपी**ति । निवृत्तमित्यनेन संबन्धः । अयं चाव्यतिरिक्तविशेषणस्य स्वभावहेतोर्वैधर्म्यप्रयोगः । कृतकत्वेनानित्यत्वे साध्ये वैधर्म्यप्रयोगं प्रदर्शयति—**यत्रानित्यत्वं निवृत्तं तत्र कृतकत्वमपी**ति । नास्तीति पूर्वेण सम्बन्धः । अयं च व्यतिरिक्तविशेषणस्य स्वभावहेतोर्वैधर्म्यप्रयोगः । पदान्तरोपस्थापितव्यतिरिक्तविशेषणस्य स्वभावहेतोर्वैधर्म्यं दर्शयति—**यत्र कृतकत्वं नास्ति तत्र प्रत्ययभेदभेदित्वमपी**ति । नास्तीति पूर्वेण संबन्धः ।

21-14 अथ कार्यहेतोः साधर्म्यवैधर्म्यप्रयोगौ प्रदर्शयति—**यथे**त्यादिना । **प्रत्यक्षानुपलम्भाभ्या**मिति । प्रत्यक्षेणानुपलम्भेन चेत्यर्थः । वह्नावुपलभ्यमाने नियमेन धूमस्योपलम्भः प्रत्यक्षमुच्यते । वह्नावनुपलभ्यमाने धूमस्यानुपलम्भोऽनुपलम्भ उच्यते । प्रत्यक्षेण कार्यकारणयोरन्वयसहचारो निश्चीयते । सति वह्नौ धूमोऽस्तीति । अनुपलभ्यमाने वह्नौ धूमस्यानुपलम्भेन तयोर्व्यतिरेकसहचारो निश्चीयते । एवं प्रत्यक्षानुपलम्भाभ्यां ययोरन्वयव्यतिरेकसहचाराववधार्येते तयोः कार्यकारणभावोऽवगम्यते इति । अनवधारिते च कार्यकारणभावे परेणापाद्यमानाप्रयोजकाशङ्का न निवारयितुं शक्येतेति कार्यहेतुं प्रयुञ्जता प्रथमं कार्यकारणभावः प्रत्यक्षानुपलम्भाभ्यामवधार्य इति भावः ।

21-15 **यथाऽवयविनिराकरणाये**ति । **प्रयुज्यत** इति शेषः । अवयवेभ्योऽतिरिक्तः कश्चिदवयवी अवयवेषु समवेत इति वदतो निराकरणायानुपलब्धिहेतुः प्रयुज्यते ।

तस्यास्य साधर्म्यवतः प्रयोगोऽयं—**यद्यत्रे**त्यादि । असद्व्यवहारयोग्यत्वं साध्यं, उपलब्धिलक्षणप्राप्तत्वे सत्यनुपलभ्यमानत्वं हेतुः । तत्र यद्यत्रोपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते तत्तत्रासद्व्यवहारयोग्यं यथा नरशिरसि शृङ्गम्, इति व्याप्तिप्रतिपादकं वाक्यम् । नोपलभ्यते चात्रोपलब्धिलक्षणप्राप्तः पराभिमतोऽवयवी कपालेष्विति पक्षधर्मताप्रतिपादकं वाक्यम् । ननु—उपलभ्यते पटः । सत्यम् । यो येन प्रकारेण परैरभिमतोऽवयवी स तथा नैवोपलभ्यते, नहि भूतले घट इव भूतलादतिरिक्तस्तदाधारकः प्रतीयतेऽवयवी अवयवेषु तदाधारकस्तेभ्योऽतिरिक्तः । तन्तव एव तु संश्लेषविशेषमापन्ना उपलभ्यन्ते, पट इति संज्ञाभेदः केवलम् ।

21–21 उपलब्धिलक्षणप्राप्तत्वे सत्यनुपलभ्यमानत्वेन हेतुना असद्व्यवहारयोग्यत्वे साध्ये, यदसद्व्यवहारयोग्यं न ( सद्व्यवहारयोग्यं ) तदुपलब्धिलक्षणप्राप्तत्वविशिष्टानुपलभ्यमानत्वाभाववत् इति तु व्यतिरेकेण व्याप्तिः । तत्र विशेष्यवति वर्तमानो विशिष्टाभावो विशेषणाभावात्मकः, विशेषणवति वर्तमानस्तु विशेष्याभावरूप इति सद्व्यवहारयोग्ये उपलब्धिलक्षणप्राप्तत्वरूपविशेषणवति वर्तमान उक्तविशिष्टाभावोऽनुपलभ्यमानत्वाभावरूप एवेत्यभिप्रेत्य व्यतिरेकव्याप्तिं प्रदर्शयति—**यत् सदुपलब्धिलक्षणप्राप्तं तदुपलभ्यत एवे**ति । यत्तु सदपि नोपलभ्यते तदुपलब्धियोग्यं नेति विशेषणाभावे विशिष्टाभावो बोध्यः । **नचैवमिहे**ति । इह—अवयवे कपाले, प्रदेशविशेषे—भूतलादौ, उपलब्धिलक्षणप्राप्तस्य—घटस्य, नचैवमिहोपलब्धिरित्यन्वयः । तथा च व्यापकनिवृत्त्या व्याप्येनापि ततो निवृत्तेन भाव्यमित्यतोऽवयविनोऽवयवेऽसद्व्यवहारयोग्यतैव सिध्यतीति भावः ।

21–25 **साधनस्य च साध्ये नियतत्वकथन**मिति । साध्ये साधनव्यापकत्वकथनमिति यावत् । **साध्याभावस्य च साधनाभावे नियतत्वकथन**मिति । साधनाभावे साध्याभावव्यापकत्वकथनमिति यावत् । व्याख्यातो नियतशब्दार्थः ।

उक्तेषु प्रयोगेषु परेषामप्रयोजकशङ्कां वारयन्नाह—**ततः प्रमाणेन व्याप्तिसिद्धावि**ति । अयमाशयः—प्रत्यक्षप्रमाणमूलां व्याप्तिं स्वीकुर्वतामस्माकं परैः क्रियमाणाया अप्रयोजकशङ्काया नावकाशः । वयं कार्यकारणभावाद्वा स्वभावाद्वा सिषाधयिषितं साधयामः । तदुभयमपि प्रत्यक्षमूलकम्, कार्यकारणभावो हि अन्वयव्यतिरेकसहचाराभ्यां प्रत्यक्षगम्याभ्यां सिध्यति । स्वभावश्च साध्यसाधनयोः प्रत्यक्षगम्यः । उपलब्धिरनुपलब्धिश्च उपलभ्यमानानुपलभ्यमानयोः स्वभाव एव पर्यवस्यतीति । एवं सत्त्वमसत्त्वं च । शृङ्गस्यान्यत्र सत्त्वं शशेऽसत्त्वं च शशशृङ्गयोः स्वभावविशेषावेव । प्रत्यक्षगम्यमेवैतदिति ।

21–28 प्रसङ्गात् परेषामप्रयोजकशङ्कामुद्भावयन्नाह—**यत्रे**त्यादिना ।

22– 1 तेषां-नैयायिकानाम् । **इहान्यः सर्वज्ञो भवतु मा वा भू**दिति । अतीन्द्रियार्थदर्शनसमर्थं सर्वज्ञं नित्यमेकमीश्वरमप्यनभ्युपगच्छन्तो मीमांसकाः सर्वज्ञमात्रनिरासाय प्रयतन्ते सौगताद्यभिमतसर्वज्ञप्रतिषेधाभिनिवेशात् । वयं तु ब्रूमः—इह जगति ईश्वरादन्यः सर्वज्ञो भवतु मा वा भूत् । तत्समर्थने तन्निरसने वा नास्माकमभिनिवेशः । किन्तु भगवान् पुनरीश्वरः सर्वज्ञोऽस्ति, योऽस्य जगतः स्रष्टा । शक्यते चास्तीति साधयितुमिति ।

22- 3 तेषामीश्वरसाधनप्रकारमनुवदति—**तथाहीत्**यादिना। निरूपयिष्यमाणे ईश्वरसाधके प्रयोगे पक्षसपक्षविपक्षविभागं प्रथमतः प्रदर्शयन्नुपक्रमते—**त्रयः खल्**[1]**विति**। सकर्तृकत्वे साध्ये निश्चितकर्तृका घटादयः सपक्षाः। ये च व्योमादयो निश्चितसकर्तृकत्वविरहास्ते विपक्षाः। ये चान्ये वनस्पत्यादयो ये च महीमहीधरादयः ते सन्दिग्धकर्तृका भवन्ति। महत्त्वसावयवत्वादि सकर्तृकत्वोपस्थापकम्, कर्तुरनुपलम्भस्तदभावोपस्थापकः, विप्रतिपत्तेर्वा संशयः, अतस्त एते महीमहीधरादयः सर्वे पक्षकोटावन्तर्भवन्ति। अन्ये च भावाः सपक्षकोटौ विपक्षकोटौ चान्तर्भवन्ति। न चतुर्थः प्रकारो भावेषु। तदयं प्रयोगोऽत्र— यत् कार्यं तत् सकर्तृकं, यथा घटादि। क्षित्यादिकं च कार्यं, यन्न कार्यं तन्न सकर्तृकं यथा व्योमादि, कार्यं चेदं क्षित्यादीति। **बुद्धिमत्कर्तृका** इति। साध्यशरीरे बुद्धिमत्त्वनिवेशेन उपादानोपकरणाद्यभिज्ञेन कर्त्रा भाव्यमिति नियमो गम्यते। तेनार्थान्तरादेर्नावसरः।

22- 4 सकर्तृकत्वसाधकतयोपन्यस्तस्य कार्यत्वहेतोराभासत्वशङ्कां निवारयन्नाह—**नायमि**त्यादिना। हेतोराभासता चाङ्गवैकल्ये, हेतोरङ्गानि च त्रीणि पक्षे सत्त्वं सपक्षे च सत्त्वं, विपक्षेत्वसत्त्वमिति। एतत्त्रयसमर्थनेन चाभासताशङ्का प्रतिक्षिप्ता भवति। तस्मात्क्रमशस्तानि समर्थयति। सर्वेषां—महीमहीधरादीनां। सपक्षे—कुम्भादौ। **नचानैकान्तिक** इति। मास्तु बुद्धिमत्कर्तृकत्वम् अस्तु च कार्यत्वमित्यप्रयोजकशङ्कामूलकेयमनैकान्तिकत्वशङ्का, सा परिह्रियते। पक्षतया परिगृहीते तरु–मही–महारुहादौ, साध्यविपर्यये—बुद्धिमत्कर्तृकत्वविपर्यये बाधकं प्रमाणमस्ति, बाधकप्रमाणोपहतत्वाद्विपर्ययस्य नानैकान्तिकत्वप्रसङ्गः। किं तद्बाधकप्रमाणं? तदाह—**तथा हीत्**यादिना। **कार्यं तावदि**ति। घटादि कार्यं तावदित्यर्थः। **मानसेन प्रत्यक्षेणे**ति। अत्र मानसेनेति विशेषणं प्रामादिकम्। आत्मसुखादावेवान्तरे मनः प्रभवति, न बाह्ये साक्षात्, मनो निमित्तमित्येतावता न बाह्यार्थप्रत्यक्षं मानसमिति वक्तुं सुशकम्। तस्माद् अलौकिकपरतया कथमपि नेयम्। घटादीनां कार्याणां कुम्भकारादिकर्तृकत्वस्य भूयोदर्शनात् तत्सहकृतेन कार्यत्वसामान्यलक्षणाप्रत्यासत्त्या जायमानेन कार्यमात्रस्य सकर्तृकत्वावगाहिनाऽलौकिकेन प्रत्यक्षेण सर्वत्र कार्ये सकर्तृकत्वं प्रत्यक्षेणोपलब्धमिति तदाशयः। इदमेव च प्रत्यक्षं साध्यविपर्यये बाधकप्रमाणमस्तीत्याशयः। तथाहीत्यादिमूलवाक्यं कार्यं तावत् कुम्भकारादेरुपजायमानं भूयोदृष्टमिति भूयोदर्शनसहायेन प्रत्यक्षेण कार्यं सकर्तृकमित्युपलभ्यत इति कथमपि शेषपूरणेन व्याख्येयम्।

22-13 **तस्मान्नेद**मिति। यस्मात् कार्यस्य सकर्तृकत्वं नैसर्गिकमिति प्रत्यक्षेणावगतं तस्मान्नेदं शङ्कनीयं, कार्यं च स्यात् कर्तृनिरपेक्षमपि स्यादित्यर्थः।

---

१. त्रयः खल्वित्यादि मूलवाक्यं आचार्यवाचस्पतिमिश्राणां वाक्यमनुकुर्वद् प्रवर्तते। तथा च न्यायवार्तिकतात्पर्यटीकायां तैरुक्तं—त्रयो हि खलु जगति भावा भवन्ति, प्रसिद्धचेतनकर्तृका यथा—प्रासादाट्टालगोपुरादयः, प्रसिद्धतद्विपर्ययाः—परमाण्वाकाशादयः, संदिग्धचेतनकर्तृकाः यथा तनुतरुमही महीधरप्रभृतय इति।

22-15 **सर्वोपसंहारेणे**ति । सर्वव्यक्त्युपसंहारेणेत्यर्थः । नहि कतिपयव्यक्तीनां मिथः साहचर्यदर्शनमात्रेण तत्सामान्ययोर्व्याप्तिः संभवति । नहि कतिपयघटपटव्यक्तीनां साहचर्यदर्शनमात्राद् भवति घटपटसामान्ययोर्व्याप्तिरिति भावः ।

बुद्धिमत्कर्तृकत्वं विकल्प्य दूषयति—**तत्र यदी**त्यादि । अयमाशयः—प्रतिनियता हि कार्येषु तस्य तस्य सा सा सामग्री, नहि घटस्य या सामग्री सा पटस्य, या पटस्य न सा घटस्य । शरीरेन्द्रियमनोव्यापारसापेक्षेषु कार्येषु बुद्धिमत्कर्तृकतेति तु दृष्टम्, शरीरव्यापारसापेक्षाणि कानिचित्कार्याणि यथोपलभ्यन्ते, तथा तन्निरपेक्षाण्यसंख्यातान्युपलभ्यन्ते, यथा तृणतरुलतागुल्मप्रभृतीनि । तस्माद्दृश्यशरीरकबुद्धिमत्कर्तृकत्वव्यभिचरितं तु कार्यत्वं, यानि च बुद्धिमत्कर्तृकाण्युपलभ्यन्ते तानि च दृश्यशरीरकबुद्धिमत्कर्तृकाण्येव । तृणादीनामपि पक्षीकरणात् न व्यभिचाराशङ्केति तु न युक्तम् । नहि व्यभिचारनिवारणाय व्यभिचारविषयस्य पक्षीकरणं युज्यत इति ।

22-20 **संदिग्धे हेतुवचना**दिति । अयमाशयः—सिषाधयिषितस्यान्वये निश्चिते हेतोराश्रयणं व्यर्थम् । व्यतिरेके निश्चिते हेतोराश्रयणमयुक्तम् अनैकान्तिकतापत्तेः । संदिग्धे तु हेतोराश्रयो युज्यते । इह तु तृणादौ दृश्यशरीरस्य कर्तुर्व्यतिरेकनिश्चयात् तत्र तत्साधनाय हेतोराश्रयोऽनुपपन्न इति ।

आशङ्कते—**अथे**ति । परिहरति—**तत्रे**ति । दुरारोहे पर्वते वह्नेर्व्यतिरेको दुर्निश्चेयः । अन्यत्र च धूमेन नियतो वह्निर्दृष्टः, अतः संदेहात् पर्वते वह्नेः साधनं युक्तम् । इह तु साध्यव्यतिरेको दृश्यानुपलम्भेन निश्चित इति महदस्ति वैषम्यमिति भावः ।

22-25 विकल्पान्तरमनूद्य दूषयति—**अथादृश्ये**ति । अदृश्यशरीरेण बुद्धिमता कर्त्रा, बुद्धिमन्मात्रेण वा कर्त्रा व्याप्तिरवगम्यत इत्यर्थः । अदृश्यशरीरकत्वस्य साध्यतावच्छेदककोटावनुप्रवेशे कुलालादिदृश्यपुरुषकर्तृकतया प्रसिद्धे घटादावनैकान्त्याशङ्का स्यादिति पक्षान्तरमाश्रयति—**बुद्धिमन्मात्रस्य वे**ति । अयमाशयः—बुद्धिमत्कर्तृकत्वमेव तु साध्यम् । स च कर्ता दृश्यशरीरो वा स्याददृश्यशरीरो वा, यत्र दृश्यस्य संभवः तत्रास्तु सः, यत्र न, तत्रादृश्यो भवितुमर्हतीति । **दृश्यानुपलम्भेन व्यतिरेकासिद्धे**रिति । व्यतिरेकस्य दृश्यानुपलम्भेनासिद्धेरित्यर्थः । अयं भावः—अभावो हि दृश्यानुपलम्भगम्यः । स चानुपलम्भः प्रतियोगिनो दृश्यतासापेक्षः, न ह्यदृश्यस्य पिशाचादेरभावो नेह पिशाच इति चक्षुषा ग्रहीतुं शक्यते । तथा प्रतियोगिषु केषांचिददृश्यस्वभावत्वेन न तत्सामान्याभावे दृश्यानुपलम्भसंभवः । इत्थं च त्वया कर्तृष्वदृश्योऽपि कर्ता यद्यभ्युपगम्येत तद्घटितकर्तृसामान्याभावो दृश्यानुपलम्भाभावेन नैवावधार्येत । वस्तुतो घटादिष्वपि त्वया कर्तृतयाऽभ्युपगतो बुद्धिमान् कर्ता नित्यः कश्चिदात्मा, सोऽप्यदृश्य एवेति योग्यानुपलम्भासंभवेन बुद्धिमतः कर्तुरभावो नैवावधार्येत । तथा च बुद्धिमतः कर्तुर्व्यतिरेके संशयात्, कार्यत्वस्य ततो व्यावृत्तेरपि संदेहात् तृणादिष्वपि तत्संदेहस्यैव प्रसङ्गात् कार्ये कर्तृसापेक्षत्वसंशयः स्यादेवेति संदिग्धविपक्षव्यावृत्तिकत्वं हेतोर्दोषो भवेदेवेति ।

इदमभिहितं भवति—बुद्धिमत्कर्तृकत्वे साध्ये बुद्धिमत्कर्तृकत्वाभाववान् विपक्षः । अयं बुद्धिमत्कर्तृको नायमित्यवधारणं दुर्घटम् । अदृश्यविषयत्वेन दृश्यानुपलम्भासंभवात् ।

तथा च संदेहेन तृणादौ तदभावः सन्दिग्ध एवेति संदिग्धविपक्षव्यावृत्तिकत्वं संदिग्धानैकान्तिकत्वे पर्यवसितं हेतोर्दोष एवेति ।

सन्दिग्धविपक्षव्यावृत्तिकत्वं हेतुदोषतया निदर्शयताऽऽचार्यधर्मकीर्तिनेदमुदाहृतम्--'अस्यैव रूपस्य सन्देहेऽप्यनैकान्तिक एव । यथाऽसर्वज्ञः कश्चिद्विवक्षितः पुरुषो रागादिमान्वेति साध्ये वक्तृत्वादिको धर्मः संदिग्धविपक्षव्यावृत्तिकः, सर्वत्रैकदेशे वा सर्वज्ञो वक्ता नोपलभ्यते इत्येवंप्रकारस्यानुपलम्भस्यादृश्यात्मविषयत्वेन संदेहहेतुत्वा'-दिति । ( न्या. वि. ११२. ) ।

ननु तृणादि पक्षीकृतं, घटादि तु सपक्षः, अथ व्योमादि नित्यमेव तु विपक्षः । यदकर्तृकं न तदुत्पत्तिमत् यथा व्योमादीति निदर्शनमुपलभ्यत एवेत्यत्राह-- **साध्याभावप्रयुक्तस्ये**ति । अयमाशयः--किमनेन निदर्शनमात्रेण, व्योमादौ नित्यतयाऽभिमते कार्यत्वाभावः किं कर्त्रभावप्रयुक्तो वा कर्तृनिरपेक्षकारणान्तराभावप्रयुक्तो वेत्यत्र नियामकाभावात् कार्यत्वाभावस्य कर्त्रभावप्रयुक्तत्वानवधारणात् व्याप्तेरसिद्धेरिति ।

23-1 उक्तदोषे आप्तसंवादमाह--**तथा चे**ति । **कार्यत्वस्ये**ति । विपक्षवृत्तिहतये--अनैकान्तिकत्वप्रसङ्गपरिहारायेति यावत् । संभाव्यतेऽतीन्द्रियः कर्ता चेत्--बुद्धिमता हि कर्त्रा शरीरेन्द्रियमनोविशिष्टेन भाव्यम् । बुद्धेः शरीरादिसापेक्षत्वदर्शनात् । शरीरिण्येव वा दृष्टत्वात् । न दृश्यते च शरीरी कर्ता तृणादौ । अथातीन्द्रियशरीरो बुद्धिमान् कर्ता तृणादौ कार्येऽभ्युपगम्यते चेदिति भावः । व्यतिरेकसिद्धिविधुरा व्याप्तिः कथं सिध्यति, तदा तस्मिन्नतीन्द्रिये दृश्यानुपलब्ध्यसंभवेन तद्व्यतिरेकासिद्धेः । अथ व्यतिरेकसिध्यर्थं दृश्यः कर्ता चेत्तृणादावप्याश्रीयते तस्य तत्रानुपलम्भादनैकान्तिकतैव हेतोरित्याशयः ।

नन्वस्ति स्वाभाविकः संबन्धः सकर्तृकत्वेन सहोत्पत्तिमत्त्वस्य, तथा उत्पत्तिमत्त्वाभावेन सह सकर्तृकत्वाभावस्य, यद् उत्पत्तिमत् तत् सकर्तृकं यथा घटादि, यदकर्तृकं तन्नोत्पत्तिमत् यथा व्योमादीति निदर्शनतस्तल्लाभात् । वह्निना सह धूमस्यापि स्वाभाविकः संबन्धः, स चावधार्यते भूयोदर्शनेन, तादात्म्यतदुत्पत्तिभ्यां नापरः संबन्धः साध्येन हेतोरिति तु न । तथा च साधनाभावस्य साध्याभावप्रयुक्तत्वादिति किं प्रयोज्यप्रयोजकभावविचारेणेतीमां शङ्कां परिहरन् पराभिमतं हेतोः साध्येन सह स्वाभाविकत्वसंबन्धवादं निरस्यति--**यत्तु त्रिलोचनेने**[1]**त्यादि**ना ।

23- 6 तदुपाधेः--तस्य संबन्धस्योपाधेरित्यर्थः । धूमेन वह्नेः संबन्धे आर्द्रेन्धनसंयोग इव वह्निना धूमस्य संबन्धे न कोऽप्युपाधिरित्यर्थः ।

---

१. इदमिह प्रतिभाति--' यत्तु त्रिलोचनेने'त्यादिना स्वसन्निधिमात्रेणे'त्यन्तं वाक्यं (23-5, 23-28) इह पठ्यमानं 'तद् अस्ति चेद्ध धूम इत्ती'त्यस्यानन्तरं (21-17) स्वरसान्वयं समुचितम् । धूमादीनां वह्न्यादिभिः सह पराभिमतस्य स्वाभाविकत्वसंबन्धवादस्य निराकरणं हि कार्यहेतुनिरूपणप्रकरणे समुचितम् । नत्वीश्वरानुमाननिराकरणावसरे । तथा--( 22-27 ) 'साध्याभावप्रयुक्तस्य साधनाभावस्यासिद्धत्वात् व्याप्तेरभावात्' इत्यस्य वाक्यस्य ( 23-27 ) ' तथा हि न तावदाकाशे साध्याभावेन साधनाभावः' इत्यस्मात् प्रागव्यवधानेन पाठः समुचितः । अस्माभिस्तु दृष्टं पाठमेवानुसृत्य कथमप्यनयोर्वाक्ययोरन्वयः संपादितः ॥

उक्तं च वाचस्पतिमिश्रैर्न्यायवर्तिकतात्पर्यटीकायां–‘ तथाहि धूमादीनां वह्न्यादिसंबन्धः स्वाभाविकः, न तु वह्न्यादीनां धूमादिभिः, ते हि विनाऽपि धूमादिभिरुपलभ्यन्ते, यदा त्वार्द्रेन्धनादिसंबन्धमनुभवन्ति तदा धूमादिभिः सह संबध्यन्ते । तस्मात् वह्न्यादीनामार्द्रेन्धनाद्युपाधिकृतः संबन्धः स्वाभाविको न भवति । ततो न नियतः, स्वाभाविकस्तु धूमादीनां वह्न्यादिभिः संबन्धः, उपाधेरनुपलभ्यमानत्वात् । क्वचिद् व्यभिचारस्यादर्शनात् । अनुपलभ्यमानस्यापि कल्पनानुपपत्तेः । अतो नियतः संबन्धोऽनुमानाङ्गमिति । ( न्या. वा. टी. १६९ )

23.8. निरस्यति–**तन्न युक्त**मिति । स्वाभाविकसंबन्धोपपादकतया निरूपितयोर्द्वयोर्मध्ये प्रथमं प्रतिक्षिपति–**यत** इत्यादिना । तस्य तेन सह संबन्धे संबन्धिभ्यां यदन्यदपेक्ष्यते तदुपाधिशब्देनाभिधीयते इत्यर्थः । **कथमदर्शनमात्रेण नास्त्येवेत्युच्यत** इति । उपाधिर्नास्त्येवेत्युच्यत इत्यर्थः । उपाधिशङ्काया अनिवार्यतया न स्वाभाविकसंबन्धावधारणं घटेतेति भावः ।

23.11. द्वितीयं हेतुं प्रतिक्षिपति–**यदप्युक्त**मिति । **प्रत्ययान्तरवैकल्येने**ति । कारणान्तरवैकल्येनेत्यर्थः । **नचैव**मिति । एवं सति प्रामाणिकानामनुमानेन भवन्ती लोकयात्रा नोपपद्येत, सर्वत्रोपाधिकल्पनायाः प्रसङ्गादिति भावः । **साधकबाधकप्रमाणाभावे संशयस्य विहितत्वा**दिति । इदं च वाचस्पतिमिश्रैराशङ्क्य परिहृतम्–‘न चादृश्यमानोऽपि दर्शनानर्हतया साधकबाधकप्रमाणाभावेन संदिह्यमान उपाधिः स्वाभाविकत्वं प्रतिबध्नातीति सांप्रतम् । अवश्यं शङ्कया भवितव्यं नियामकाभावादिति दत्तावकाशा खल्वियं लौकिकप्रमाणमर्यादातिक्रमेण शङ्कापिशाची लब्धप्रसरा न क्वचिन्नास्तीति नायं क्वचित्प्रवर्तेत ’ इति ( न्या. वा. टी. १६९ )

23.16. **यथाऽन्यत्वाविशेषेऽपी**ति । पूर्वपूर्वक्षणानामुत्तरोत्तरक्षणेषु हेतुत्वे वक्तव्ये पूर्वत्वस्योत्तरत्वस्य चासंख्यातेषु पूर्वेषूत्तरेषु च साधारण्येनातिप्रसङ्गे प्रसजति देशकालजात्यादिना साधर्म्यस्य सर्वस्य स्वलक्षणतया अन्यान्यत्वं वदतां सौगतानामसंभवादन्यत्वाविशेषेऽपि कस्यचिदेव क्षणस्य कस्मिंश्चिदेव क्षणे हेतुत्वं यथाऽभिमतं तथा कस्यचिदेव केनचिदेव स्वाभाविकः संबन्ध इति ममाप्यभिमतमित्याशयः ।

23.18. **तन्न युक्त**मिति । प्रमाणसिद्धं वह्निधूमयोर्हेतुहेतुमद्भावमेव तयोः संबन्धं वदतामस्माकं प्रमाणशून्यं स्वाभाविकं संबन्धं तयोः कल्पयतां युष्माकं च महदस्ति वैषम्यमिति भावः ।

23.20. स्वाभाविकशब्दार्थं विकल्प्य दूषयति–**स्वाभाविकः संबन्ध इति कोऽर्थ** इति । भूयोदर्शनमात्रस्य व्याप्तिनिश्चयाधायकत्वं न युज्यत इत्याशयेनाह–**साधर्म्येण वैधर्म्येण वा दृष्टान्तमात्रमस्तीति न व्याप्तेरपि सिद्धि**रिति । **यदृच्छामिलितयोरपी**ति । करभविशेषगर्दभविशेषयोर्यदृच्छामिलितयोर्भूयस्सु स्थलेषु दर्शनमात्रेण तयोरपि व्याप्तिनिश्चयापातादित्यर्थः ।

23.26. ननु तर्हि न्यायप्रयोगस्थले निदर्शनप्रयोगस्य क्वोपयोगः? इत्यत्राह—**तस्मान्निदर्शनमि**ति। **गृहीतविस्मृतप्रतिबन्धग्राहकप्रमाणस्मरणद्वारेणे**ति। पूर्वं गृहीतः, अथ विस्मृतः, यो वह्निधूमयोः प्रतिबन्धः हेतुहेतुमद्भावलक्षणः संबन्धः तद्ग्राहकं यःप्रमाणं अन्वयसहचारव्यतिरेकसहचारलक्षणं तत्स्मरणद्वारेणेत्यर्थः। गृहीतं विस्मृतं च यत्प्रतिबन्धग्राहकं प्रमाणं तत्स्मरणद्वारेणेति वा तदर्थः।

23.27. **न स्वसन्निधिमात्रेणेति**—अन्वयव्यतिरेकयोर्निदर्शनसंनिधिमात्रेणेत्यर्थः। नहि व्योमादौ सकर्तृकत्वाभावोत्पत्तिमत्त्वाभावयोः साहचर्यदर्शनमात्रेणेति प्रकृते तात्पर्यम्।

23.28. तदेतदुपपादयति—**तथाहीत्यादि**ना।

24.1. **आकाशे हि यथे**ति। अयमाशयः—उत्पत्तिमत्त्वेन बुद्धिमत्कर्तृकत्वं साधयता तत्र व्योमादि व्यतिरेकनिदर्शनतया प्रदर्शयता त्वया व्योमादीनामुत्पत्तिराहित्यस्य बुद्धिमत्कर्त्रभावप्रयुक्तत्वमुपपादनीयम्, तन्नोपपद्यते। तत्र बुद्धिमत इव ततोऽन्यस्याचेतनस्यापि कारणस्याभावो वर्तत एव। तथा च चेतनाधिष्ठितादपि स्वस्वकारणाद् बीजादेस्तृणादिकमुद्भवतीति वदतां योऽभिमतस्तथाविधकारणाभावः तत्प्रयुक्तत्वमेव व्योमादेरनुत्पत्तिमत्त्वे प्रयोजकं किं न स्यात्। तस्मात् बुद्धिमत्कर्तृकत्वाभावप्रयुक्तत्वस्योत्पत्तिमत्त्वाभावेऽसिद्ध्या नोत्पत्तिमत्त्वे बुद्धिमत्कर्तृकत्वव्याप्यता सिद्ध्येदिति।

24.3. **नापि घटे कार्यत्वस्य बुद्धिमदन्वयदर्शनादाकाशेऽपि बुद्धिमदभावादेव कर्तृत्वाभावो वक्तुं युज्यत** इति। घटे कार्यत्वस्य बुद्धिमदन्वयदर्शने तं विना तस्योत्पत्तिर्माभूत्। आकाशस्यानुत्पादे कथं तस्य प्रयोजकता? नह्यन्यत्र दृष्टं कारणमन्यत्र न दृश्यत इत्येतावताऽन्यस्यानुत्पत्तौ तत्तन्त्रं भवेदिति भावः। ननु धूमेन वह्न्यादौ साध्ये विपक्षे धूमस्यादर्शनात् धूमाभावो वह्न्यभावप्रयुक्तो यथा भवति, तथा व्योम्नि विपक्षे उपलभ्यमान उत्पत्त्यभावो बुद्धिमदभावप्रयुक्तः किं न स्यादित्याशङ्क्याह—**किंचादर्शनमात्रेणे**ति। विपक्षे हेतोरदर्शनमात्रेण चेत् तस्य व्यतिरेकः सिध्येत्, संभाव्यते नाम साधनाभावे साध्याभावप्रयुक्तत्वम्। न च हेतोरदर्शनमात्रेण हेत्वभावः सिध्यतीति भावः।

24–8 तदेतदुपपादयति—**तथाही**ति। न चोपलम्भनिवृत्तिमात्रं प्रयोजकमुपलभ्याभावे भवितुमर्हति। उपलम्भनिवृत्तिरुपलम्भकसामग्र्यभावात्। उपलभ्यनिवृत्तिस्तु स्वसामग्र्यभावादेव। उपलम्भश्च नोपलभ्यनिष्पादकसामग्र्यन्तर्गतः, किन्तु उपलम्भकसामग्र्यां उपलभ्योऽन्तर्भवति, चक्षुरादेरिव विषयस्याप्युपलम्भे हेतुत्वात्। तत् उपलभ्याभावप्रयुक्त उपलम्भाभावो, नतूपलम्भाभावप्रयुक्त उपलभ्याभावः, नहि खलबिलान्तर्गतमुपलभ्यते केनापि। तस्मात् साध्यसाधनयोर्हेतुहेतुमद्भावे तादात्म्ये वा प्रतिबन्धे सत्येव साध्याभावप्रयुक्तः साधनाभावो भवेत्। अन्यत्र तु संदिग्धविपक्षव्यावृत्तिकत्वे हेतोर्दोषोऽपरिहार्य एवेति भावः।

24–17 **यदपि वाचस्पतिरा**हेति। इदं तु वाचस्पतिमिश्राणां वचनम् 'तस्मात् प्रामाणिकलोकयात्रामनुपालयता यथादर्शनं शङ्कनीयम्। **न त्वदृष्टपूर्वमपि**। विशेषस्मृत्यपेक्षो

हि संशयो नास्मृते भवति, न च स्मृतिरननुभूतचरे भवितुमर्हति। तस्मादुपाधिं प्रयत्नतोऽन्विष्यन्तोऽनुपलभमाना नास्तीत्यवगम्य स्वाभाविकत्वं संबन्धस्य निश्चिनुमः' इति। (न्या. वा. टी. १६९) तदिदमर्थतोऽनूद्यते–**विशेषस्मृत्यपेक्ष एवे**त्यादिना। अयमाशयः– ननु साध्यसाधनयोस्तादात्म्येन तदुत्पत्त्या वा संबन्धेन भाव्यम्, अन्यथा इह सिषाधयिषितं न स्यादपि, साधनं तु स्यादिति साध्यसंशयसमुद्भवादप्रयोजकशङ्का समवतरेदेवेति चेन्न। वह्निधूमयोः साहचर्ये भूयस्स्वधिकरणेषु भूयोदृष्टे धूमस्य वह्निना सह संबन्धे उपाधावनुपलभ्यमाने पर्वते धूमं पश्यतो न तत्र वह्नेः संशयः स्यात्। संशयस्तु सति विशेषस्मरणे। वह्निविरहितस्य धूमवतः कस्यचिद्देशस्य प्रागनुभूतस्य स्मरणे सत्येव भवेत्। यथा धूमवह्न्योश्शतशः सहचारदर्शनेऽपि धूमरहितस्य वह्निमतोऽयोगोलकस्य प्रागनुभूतस्य स्मरणात् पर्वतादौ वह्नौ दृश्यमाने भवेदेव धूमे संशयः। तथा पार्थिवत्व लोहलेख्यत्वयोः शतशः सहचारदर्शनेऽपि लोहलेख्यत्वाभाववतः पार्थिवस्य वज्रमणेः स्मरणे भवेदेव पार्थिवेऽपि क्वचिल्लोहलेख्यत्वे संशयः। तस्मात् यथादर्शनमेवाशङ्कनीयमिति।

24–19 **तादात्म्यतदुत्पत्तिसंबन्धत्यागेनेति**। आशङ्कनीयमित्युत्तरेणान्वेति। **तत्र प्रमेयत्वस्य व्यभिचारदर्शनमेवेति**। अयमाशयः—कतिपयप्रमेयेषु भूयोदृष्टवह्निसाहचर्येष्वपि दृष्टादृष्टसाधारणत्वेन प्रमेयत्वस्य प्रमेये दृश्यमानेऽपि भवति यथा वह्नौ संशयस्तथा कतिपयधूमेषु दृष्टकतिपयवह्निसाहचर्येष्वपि धूमत्वस्य दृष्टसाहचर्यादृष्टसाहचर्यसाधारणतया प्रतिबन्धविशेषानभ्युपगमे दृष्टेऽपि धूमे भवेदेव वह्नौ संशयः, एवं कतिपयकार्येषु दृष्टकर्त्रपेक्षेष्वपि कार्यत्वस्य दृष्टकर्त्रपेक्षादृष्टकर्त्रपेक्षसाधारणतया दृश्यमानेऽप्यङ्कुरादौ कार्ये भवेदेव कर्त्रपेक्षायां संशय इति यथादर्शनमेव भवति संशयावसर इति।

24–25 **निरनुयोज्यानुयोगलक्षणेति**। निग्रहस्थानेनेति शेषः। संदिग्धविपक्षव्यावृत्तिकत्वे परोक्तहेतोः सदूषणेऽस्माभिरापादितेऽसद्दोषोद्भावनं नाम निग्रहस्थानमित्यस्मान् प्रति वदन् वादी असत्यपि निग्रहस्थाने निग्रहस्थानमुद्भावयन् स्ववचनेन स्वयमेव निरनुयोज्यानुयोगलक्षणेन निग्रहस्थानेन गृहीतो भवतीति भावः। "अनिग्रहे निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः" इति च निरनुयोज्यानुयोगलक्षणम्। (न्या. सू. अ. ५ आ. २ सू. २३)

25–26 परोक्तमीश्वरानुमानं प्रकारान्तरेण निरस्यति–**किञ्चेति**। **सिद्धसाधन**मिति। असर्वज्ञेनैकेन बुद्धिमता बहुभिर्वा तैः संभूय कृतत्वेऽपि सिषाधयिषितसंपत्त्याऽर्थान्तरमिति यावत्। **दृष्टान्तधर्मिणि प्रमाणेनेति**। घटादौ कुलालाद्यसर्वज्ञकर्तृकतया प्रसिद्धे नित्यसर्वज्ञैककर्तृकत्वस्य प्रमाणागम्यत्वेन दृष्टान्तस्य साध्यविकलतयाऽनैकान्त्यमिति भावः।

25–2 **अथ सामान्येन व्याप्तिमादायेति**। सर्वज्ञत्वादिविशेषणाविशेषितबुद्धिमन्मात्रकर्तृकत्वेन सामान्येनैव कार्यत्वस्य व्याप्तिः, सिद्ध्यति तु विशेषः सर्वज्ञैककर्तृकत्वम्। कथम्? कार्यत्वस्य तृणलतातरुभूभूधरादिपक्षधर्मताबलात्, नहि सर्वज्ञैककर्तृकत्वं विना तेषां कार्यतोपपद्यत इति भावः।

25-3 निरस्यति—**तन्न युक्त**मिति । विनाऽपि कर्तुः **सर्वज्ञ**त्वादिविशेषं कार्यत्वस्य पक्षधर्मतोपपद्यत एवेति कथं पक्षधर्मताबलाद्विशेषसिद्धिरित्याशयेनाह—**येने**त्यादिना । **असर्वज्ञत्वेऽपी**ति । तृणादावपि कर्ता चेत्कार्यत्वेन सिद्ध्यति, तेन सर्वज्ञेन भाव्यमिति कोऽयं नियम इति भावः । **एकत्वसिद्धौ ही**ति । तृणतरुलताभूभूधरादीनां सर्वेषामेव कर्ता चेदेकः स्यात् तदा तेन सर्वज्ञेन भाव्यम्, न चैष नियमः, तत्तदुपादानाद्यभिज्ञैस्तैस्तैर्बहुभिः संभूय सर्वमिदं कृतमित्यपि वक्तुं शक्येत हीति भावः । अनेककर्तृकं कार्यं निदर्शयति—**यथाऽनेककीटिकाशते**ति ।

25-15 **नित्यैकसर्वज्ञे बुद्धिमति साध्य** इति । नित्यैकसर्वज्ञकर्तृकत्वे साध्ये इत्यर्थः । नित्यता चात्र जन्ममरणराहित्यलक्षणा । विरुद्धतामुपपादयति—**अनित्यानेकासर्वज्ञेन बुद्धिमता कार्यत्वस्य व्याप्तत्वा**दिति । यत्र कार्यत्वं तत्र नित्यैकसर्वज्ञकर्तृकत्वाभावः । यथा घटादि । घटादीनां केषांचिदेककर्तृकत्वेऽपि नित्यैकसर्वज्ञकर्तृकत्वं नास्त्येव । कुलालादेरसर्वज्ञत्वात् जन्ममरणशालित्वाच्च । रथगोपुरादीनां तु कर्तारो बहवः, असर्वज्ञा अनित्याश्च । अतो हेतुर्विरुद्ध इत्यर्थः

25-18. उपक्रान्तमुपसंहरति—**तस्मात् साध्यसाधनयोर्व्याप्तिर्दृष्टान्तधर्मिणि प्रमाणेनावश्यं दर्शयितव्येति स्थित**मिति । न केवलं भूयोदर्शनमात्रेण व्याप्तिः सिद्ध्यति, प्रमाणेन तु सा दृष्टान्ते प्रदर्शयितव्या । साध्येन सह हेतोः प्रतिबन्धः प्रमाणसिद्धः कश्चिदपेक्ष्यते, स च तादात्म्यं तदुत्पत्तिर्वा । स्वाभाविकः संबन्ध इति तु न प्रमाणसिद्धम् । अतः कार्यत्वेन कर्तुरनुमानं नोपपद्यत इति भावः ।

25-20. ननु प्रयोगभेदात् साधर्म्यवद्वैधर्म्यवच्चेति परार्थानुमानस्य द्वैविध्यमुच्यते । सामान्यलक्षणं तु त्रिरूपलिङ्गाख्यानं परार्थानुमानमिति । तत्र साधर्म्यवता त्वन्वयमात्रमवगम्यते । वैधर्म्यवता तु व्यतिरेकमात्रमवगम्यते । अतो नैकत्र त्रिरूपप्रतिपत्तिः, अतो लक्षणमिदमसंभवीत्याशङ्कते—**नन्वि**त्यादिना । परिहरति—**नैष दोष** इत्यादिना ।

25-23. अन्वयश्चेच्छब्देन गम्यते तत्र व्यतिरेकोऽर्थाद्गम्यते । व्यतिरेकश्चेच्छब्दतो गम्येत तत्रान्वयोऽर्थतो गम्येत । तस्मादुभयमपि त्रिरूपाख्यायकं भवतीत्याह—**यस्मात्साधर्म्यवती**त्यादिना । आर्थिकतामुपपादयति—**व्यतिरेकागृहीताववि**ति । **सामर्थ्य**मिति । तदिदं सामर्थ्यमित्यर्थः । उक्तं च धर्मकीर्तिना—"साधर्म्येणापि हि प्रयोगेऽर्थात् वैधर्म्यगतिः, असति तस्मिन् साध्येन हेतोरन्वयाभावात्, तथा वैधर्म्येणाप्यन्वयगतिः असति तस्मिन् साध्याभावे हेत्वभावस्यासिद्धेः" इति । (न्या० बि० १०९).

व्याख्यातं चैतद्धर्मोत्तराचार्येण—'ननु च साधर्म्यवति व्यतिरेको नोक्तः । वैधर्म्यवति चान्वयः, तत्कथमेतत्त्रिरूपलिङ्गाख्यानम्' इत्यादिना ( न्या० बि० टी० ९९ ).

26-5. **साध्यधर्मिण्येवे**ति । पक्षैकदेश एवेत्यर्थः । **अन्तर्व्याप्तिपक्ष** इति । व्याप्तिग्रहणाय पक्षादन्यस्यानाश्रयणादन्तर्व्याप्तिपक्षोऽयमित्यर्थः । पक्षैकदेश एव व्याप्तिग्रहणं परैरपीष्यते । तेषां बहिर्व्याप्तिपक्षोऽभिमत इति व्याप्तिग्रहणाय पक्षादन्यस्याश्रयणाद् बहिर्व्याप्ति-

पक्ष इत्यर्थः । व्योमादिकं विमतं न स्थिरं, किन्तु क्षणिकं सत्त्वेनेष्यमाणत्वात्, यत् सत्तत् क्षणिकं यथा घट इति भवति साधर्म्यदृष्टान्तप्रयोग इति भावः । व्याप्तिग्राहकं प्रमाणं किं ? आह–**प्रसङ्गप्रसङ्गविपर्ययाभ्याम्**इति । अनुपदमेवोपपादयिष्यति स्वयम् ।

26-9. **तत्र शिंशपात्वस्य** वृक्षव्यवहारयोग्यत्वे साध्ये दृष्टान्ते प्रत्यक्षानुपलम्भाभ्यां व्याप्तिर्ग्रहीतव्येति । साधर्म्यदृष्टान्ते प्रत्यक्षेणान्वयावगमात् वैधर्म्यदृष्टान्तेऽनुपलम्भेन व्यतिरेकावगमाच्च प्रत्यक्षेणानुपलम्भेन च व्याप्त्यवगम इत्यर्थः । यद्वृक्षव्यवहारयोग्यत्वं यच्च शिंशुपात्वं तदुभयमपि वृक्षस्य स्वभावविशेष इति शिंशुपान्तरेषु साधर्म्यदृष्टान्तेषु प्रत्यक्षेण तयोरन्वयावधारणात् । वैधर्म्यदृष्टान्तेषु वृक्षादन्येषु तयोर्व्यतिरेकस्यानुपलम्भेनावधारणात् प्रत्यक्षानुपलम्भाभ्यां व्याप्त्यवधारणमिति भावः ।

26-10. **सत्त्वक्षणिकत्वयो**रिति । प्रसङ्गप्रसङ्गविपर्ययावुत्तरत्र 'यदुक्तं प्रागि'त्यादिना निदर्शनोपन्यासमुखेनोपपादयिष्यति । अयमाशयः — प्रसङ्गः —प्रसञ्जनं, यदि क्षणिकता न स्यात् तर्हि सत्त्वं न स्यात् । सत्त्वं ह्यर्थक्रियाकारित्वं, स्थिरत्वेनाभिमतस्य तन्नोपपद्यते इति । स्थिरत्वेनाभिमतस्य तदनुपपत्तिश्चान्यतो बोध्या । घटादिषु च भावेषु अर्थक्रियासमर्थेषु क्षणिकत्वमेवेति प्रसङ्गविपर्ययो दृष्टः । तदिदं पराभिमतव्योमादिनित्यभावनिराकरणप्रकरणे शान्तरक्षितेनोक्तम्—

' क्षणिकत्ववियोगे तु न सत्तैषां प्रसज्यते ।
क्रमेण युगपच्चापि यस्मादर्थक्रियाकृतः ॥
न भवन्ति स्थिरा भावा निस्सत्त्वास्ते ततो मताः ।'

इति ( तत्त्वसं० ४२३ )

व्याख्यातं च कमलशीलेन–' कथं पुनस्य हेतोर्व्याप्तिः सिद्धेत्याह–क्षणिकत्ववियोगे त्वित्यादि । ' इति ( तत्वसं० पञ्जि० ४२३ ) स्थिरतयाऽभिमतेषु भावेष्वर्थक्रियासामर्थ्यं नोपपद्यत इत्येतत् 'तथाही'त्यादिना 'सा च स्थिरेषु भावेषु न घटेते'त्यन्तेन ग्रन्थेन विस्तरश उपपादितम् ( तत्त्वसं० पञ्जि० ४२४ )

**साध्यविपर्ययबाधकप्रमाणेन** वेति । सर्वेषामेव घटादीनां भावानां सत्त्वेन क्षणिकत्वे साध्ये साध्यविपर्यये स्थिरत्वे यद् बाधकं प्रमाणं क्रमयौगपद्यनिवृत्तिलक्षणं तेन विपक्षे पराभिमते व्योमादौ वस्तुत्वावस्तुत्वाभ्यां विकल्प्यमाने सति व्याप्तिरवधार्येत इत्यर्थः । अयमाशयः–सर्वेषामेव भावानां क्षणिकत्वे साध्ये सपक्षासंभवेन यन्न क्षणिकं तन्न सत् यथा पराभिमतं व्योमादीति व्यतिरेकव्याप्तिरवधार्या । ननु सता क्षणिकेन भाव्यमिति कोऽयं नियमः ? । घटादयः सन्तोऽप्यक्षणिका एव किं न स्युरिति तु नाशङ्कनीयम् । यद्येवं सत्त्वमप्येषां मा भूत् । सत्त्वं ह्यर्थक्रियाकारित्वं । अर्थक्रियाः कुर्वदखिलं क्रमेण युगपद्वा कुर्यात् । स्थिरत्वे भावानामुभयथाऽपि तन्न घटते, तस्माद् व्योमादीनामिवावस्तुतैवापतेत् । अथ तेषां वस्तुत्वे क्षणिकैरेव तैर्भाव्यमिति ।

ननु व्योमादिस्थिरभावमनङ्गीकुर्वतां मते व्योमादेर्विपक्षस्याप्रसिद्धेर्विपक्षे धर्मिणीति कथमुच्यते । सत्यम् । अथापि नासङ्गतिः न ह्यत्र वैधर्म्यदृष्टान्तेनावश्यं वस्तुभूतेन भाव्यम् । तथाचोक्तम्

' तस्माद्वैधर्म्यदृष्टान्ते नेष्टो हेतोरनाश्रयः । '

इति । उदाहृतं चैतत् कमलशीलेन ( तत्वसं० पञ्जि० १४९ )

26-13 **त्रिविधप्रत्यक्षानुपलम्भेनेति** । प्रत्यक्षं चानुपलम्भश्च तयोः समाहारः प्रत्यक्षानुपलम्भं तेन । तत्र प्रत्यक्षमेकमनुपलम्भौ द्वाविति समुदायस्यावयवभेदात् त्रैविध्यम्, प्रत्यक्षानुपलम्भलक्षणकारणत्रिकेण कार्यकारणभावावधारणाद् व्याप्त्यवधारणमिति यावत्। अयमाशयः—कार्यकारणभावग्राहकावन्वयव्यतिरेकौ, तत्रान्वयः प्रत्यक्षेण गम्यते । व्यतिरेकोऽनुपलम्भेन । धूमः सति वह्नावुपलभ्यते इत्येतत् प्रत्यक्षम् । असति नोपलभ्यत इत्ययमनुपलम्भः । अयं चानुपलम्भः प्राक् पश्चाच्च, उत्पत्तेः प्राक् कारणस्य वह्नेरभावात् । पश्चाच्च कारणे वह्नौ विनष्टे, एवं पूर्वापरकालभेदात् अनुपलम्भद्वैविध्यम् । आहत्य प्रत्यक्षानुपलम्भलक्षणकारणत्रिकेण कार्यकारणभावावधारणद्वारा भवति व्याप्त्यवधारणमिति ।

26-14 ' यदा धूमस्तदा वह्निः, यदा न वह्निस्तदा न धूम ' इति कालत उपलम्भानुपलम्भाभ्यां त्रैविध्यमुक्तम् । अथ ' यत्र धूमस्तत्र वह्निर्यत्र न वह्निस्तत्र न धूमः ' इति देशत उपलम्भानुपलम्भाभ्यां द्वाभ्यां मिलितास्ते त्रयः कार्यकारणभावावधारणे कारणमिति भवति कारणपञ्चकमित्यभिप्रेत्याह—**पञ्चविधप्रत्यक्षमुपलम्भतो वे**ति ।

26-17 व्याप्त्यवधारणे कारणमुक्त्वाऽनवधारणे दोषमाह—**व्याप्त्यनिश्चयेऽनैकान्तिको दोष** इति ।

26-20 **घटवदिति** । वैधर्म्यदृष्टान्तोऽयम् । **अयं हेतु**रिति । साध्यस्य सपक्षेऽनिश्चयात् विपक्षे साधनाभावस्य सतोऽपि साध्याभावप्रयुक्तत्वानिश्चयात् जीवच्छरीरे सात्मकत्वसाधनाय परैः प्रयुज्यमानः सप्राणत्वहेतुरसाधारण इति भावः ।

26-23 परमतेनाह—**अपरश्चासाधारण** इति । **यथाऽनित्यः शब्दः श्रावणत्वा**दिति। पक्षमात्रवृत्तित्वादिति यावत् । **घटवदाकाशव**दिति । क्रमात्सपक्षविपक्षयोर्निर्देशः ।

27-3 **ननु यद्येतत् प्रमाणं ने**ति । यदनेकगतं तदनेकम् अनेकवृत्ति च सामान्यम् यत् सत् तत् क्षणिकम् सच्च व्योमेति वदद्भिरस्माभिः सामान्यं व्योम वाऽभ्युपगम्य तत्र धर्मविशेषस्य साधनाय नेह व्याप्तिः प्रमाणीक्रियते, तयोरनभ्युपगमादिति चेत् किमर्थोऽयं व्याप्यव्यापकभावोपन्यास इति भावः । **व्याप्तिस्मरणार्थमिति** । अयमाशयः—यदनेकगतं तदनेकं, तस्मात् अनेकगतं सामान्यमिष्यता सामान्यमनेकमेवेष्टव्यम् एकंतदिति वदताऽनेकगतमित्येतद्वा परित्याज्यम्, इति परं प्रत्यनिष्टे आपादयितव्येऽनेकगतत्वानेकत्वयोर्व्याप्यव्यापकभावे अनिष्टापादकांशेऽनेकानुगतैकसामान्यवादिनं प्रति प्रदर्शिते एकत्वं वा परित्याज्यं, अनेकसमवेतत्वं वा नेष्टव्यमित्यापादनीयानिष्टांशः स्मारितो भवेत् । यथा

कतिपयवह्निधूमव्यक्तीनां कतिपयस्थानेषु यथा महानस इत्येकांशबोधने सकलवह्निधूमयोरविनाभाव उपपाद्यः स्मारितो भवति तथेति। इदं चानिष्टापादनं पराभिमतसामान्यप्रतिषेधार्थे पर्यवस्यति। एवं यत्सत् तत् क्षणिकमिति व्याप्तिप्रदर्शनं व्योम्नः क्षणिकत्वप्रसंजनमुखेन प्रतिषेध एव पर्यवस्यतीति।

27-8 **वादिने**ति। विजिगीषुकथायां वादिना स्वपक्षस्थापनाय प्रयोगः कर्तव्यः, स्वार्थपरार्थानुमाननिरूपणेन तत्र यज्ज्ञातव्यं तदवबोधितं भवति। अथ परोक्तहेतौ दोषोद्भावनं विधेयम्, तदवबोधनायायमुपक्रम इति हेत्वाभासनिरूपणे सङ्गतिः प्रदर्शिता भवति।

27-10 **न्यूनताद्युक्ति**रिति। न्यूनता—हेतोरवश्यापेक्षिते रूपत्रयेऽन्यतमस्य न्यूनता।

27-13 **सन्दिग्धसाध्यधर्मो ही**ति। सिद्धस्य साधने सिद्धसाधनं नाम निग्रहस्थानान्तरमिति परे।

त्रिरूपं तु लिङ्गं, त्रिष्वन्यतमं च पक्षसत्त्वं। पक्षश्च संदिग्धसाध्यधर्मा, साध्यंचेन्निश्चितं सन्दिग्धसाध्यकत्वाभावेन पक्षसत्त्वस्य रूपस्यासंभवात् हेतुलक्षणं नास्तीत्यसिद्धावेव समावेशान्न निग्रहस्थानान्तरमिति। हेतोरनाश्रयो व्यस्तः—हेतोर्वैयर्थ्यं निरस्तम्।

27-15 **नहि सामर्थ्यं नाम स्वरूपादन्य**दिति। समर्थे वस्तुनि सामर्थ्यं नाम न वस्तुस्वरूपाद्भिन्नः कश्चन धर्मः, वस्तुस्वरूपमेव तु तत्। तस्मिन्नसति वस्त्वेव नेत्युक्तं भवतीति हेतोरसामर्थ्येऽवस्तुत्वमेव तस्येति स्वरूपासिद्धावेव तस्यान्तर्भाव इति भावः।

27-19 **यथा सर्वगत आत्मे**ति। आत्मेति पक्षनिर्देशः। सर्वगत इति साध्यनिर्देशः।

27-20 **तदिह बौद्धस्यात्मैव न सिद्ध** इति। पक्षेण ह्युभयसंप्रतिपन्नेन भाव्यम्। **किं पुनरस्य सर्वदेशोपलभ्यमानगुणकत्वं सेत्स्यती**ति। पक्षतयाऽभिमतस्याऽऽत्मन एवासिद्धौ तद्धर्मतयाऽभिमतस्य हेतोः क्व सिद्धिरिति कैमुतिकन्यायेनासिद्धिरित्युक्तं भवति। पक्षस्यासिद्धिमुपपादयति—**तथा ही**त्यादिना।

27-26 यच्च मानसेन प्रत्यक्षेणात्मनः सिद्धिरिति, तन्निरस्यति—**मानसस्यापी**ति। सत्यं, भवत्यहमिति प्रत्ययः, स न केवलमहमित्येतावन्मात्रावलम्बनः, गौरोऽहं, स्थूलोऽहं, कृशोऽहं, गच्छाम्यहमिति स्थौल्यादिबाह्यधर्मावलम्बन एव, तस्मादहमर्थेन तदनुगुणेन धर्मिणा शरीरेणैव भाव्यमिति भावः।

28-3 **भाक्तो युक्त** इति। भाक्तताश्रयणमेव युक्तमित्यर्थः। **स्खलद्वृत्तित्वप्रसङ्गा**दिति। आह च कमलशीलः—'यद्ययं गौणः स्यात् तदा स्खलद्वृत्तिर्भवेत्। नहि लोके सिंहमाणवकयोर्मुख्यारोपितयोर्द्वयोरपि सिंह इत्यस्खलिता बुद्धिर्भवति। मदीयाः शरीरादय इति व्यतिरेकदर्शनात् स्खलद्वृत्तिरहंकारः शरीरादिरिति चेन्न। आत्मन्यपि स्खलद्वृत्तित्वप्रसङ्गात्। तत्रापि हि मदीय आत्मेति व्यतिरेको दृश्यते। कल्पितोऽत्र भेद इति चेदितरत्रापि समानमस्तु'। इति। ( तत्वसं० पञ्जि० ९०. )

28-4 **कार्यस्वभावलिङ्गाभावादि**ति । कार्यस्य स्वभावस्य वा लिङ्गस्याभावादित्यर्थः । तयोरभावमेवोपपादयति—**नित्यपरोक्षेणे**त्यादिना । सति तस्मिन्निदं कार्यं, असति च तस्मिन्नेदं इत्यन्वयव्यतिरेकसहचारदर्शने हि तस्येदं कार्यमिति विज्ञायेत । नित्यतया परोक्षतया चाभ्युपगतस्य देशकालपरिच्छेदाभावेनान्वयतिरेकोपलम्भाभावान्न कार्यलिङ्गसिद्धिः, आत्मन एवासिद्धेः कः स्वभावलिङ्गस्य प्रसङ्ग इति भावः ।

28-7 **अन्येनापि लिङ्गेनेति** । जीवच्छरीरं सात्मकं प्राणादिमत्त्वादिति यदनुमानं प्रदर्शितं तत्र साध्यस्यात्मनोऽसिद्धतया न तेन हेतोर्व्याप्तिर्निश्चीयेतेति न तदनुमानमात्मसाधनाय प्रभवतीति भावः ।

28-11 **न काऽपि विप्रतिपत्तिरि**ति । अस्मदभ्युपगता क्षणिकविज्ञानधीरेव भवताऽऽत्मेति शब्दान्तरेण व्यवह्रियत इति नात्र नो विप्रतिपत्तिरिति भावः ।

28-15 **ननु व्याप्त्यसिद्धिरपि दूषण**मिति । सोपाधिकत्वेन व्याप्यत्वासिद्धिरिति परैरसिद्धावन्तर्भाव्यमाना या व्याप्यत्वासिद्धिः सा कुतो नोक्तेति भावः । **न स्वलक्षणाभ्यामिति** । सर्वमेव हि वस्तु स्वलक्षणम् । स्वमेव लक्षणं यस्य तत्, नान्येनानुगतेन सामान्येन लक्ष्यते । तस्मात् सर्वमेव क्षणिकं तत्तद्व्यक्तिलक्षणमेव । तासां च तत्तद्व्यक्तीनां देशकालभेदेन परिच्छेदेन परिच्छिन्नतया तत्तद्व्यक्तीनामेव साहचर्यग्रहात् सामान्यानवलम्बिनी व्याप्तिर्नैव सिद्ध्येत् । सामान्यमुखेनैव हि व्याप्तिर्ग्राह्येति भावः ।

28-19 **तत्र यदि साधनं साध्येन व्याप्तमि**त्यादि । उपाधिपरिज्ञानपूर्वकं वाऽन्यथा वा साधने साध्यव्याप्त्युपरोधग्रहे स्यादेवानैकान्तिकतेति व्यभिचारोन्नायकतामात्रेण न दोषान्तरतेति भावः ।

28-21 ननु सामान्यमनभ्युपगच्छतां सामान्यमुखेनैव व्याप्तिग्रह इत्येतत् कथं स्यादिति शङ्कते—**नान्व**त्यादिना । समाधत्ते—**नैष दोष** इति । नन्वपोह इति संज्ञाभेदमात्रम्, अनेकानुगतं त्वभ्युपगम्यते त्वयाऽपीत्याशङ्कां परिहरन्नाह—**ननु कोऽयमपोहो नाम**त्यादिना । **बाह्य एवे**ति । योऽभ्युपगतो बाह्यो गवादिः स एव, नान्यत् सामान्यं परैरिवेष्यत इति भावः । अपोहश्च पर्युदासतः प्रसज्यप्रतिषेधतश्च भवति द्वेधा । पर्युदासश्च भवति द्वेधा—अर्थात्मा बुद्ध्यात्मा चेति । तथा चोक्तम्—

“ तथाहि द्विविधोऽपोहः पर्युदासनिषेधतः ।
द्विविधः पर्युदासोऽपि बुद्ध्यात्मार्थात्मभेदतः ॥ ”

इति ( तत्वसं० ३९६ )

28-26 तत्र प्रथममर्थात्मात्मकमपोहं व्याचष्टे—**अपोह्यतेऽन्यस्मा**दिति । अन्यस्मात् महिषादेरन्यद् विजातीयं शाबलेयादि अपोह्यते व्यावर्त्यते इति सेयं व्यावृत्तिरपोहः । सा चेयं व्यावृत्तिः शाबलेयाद्यात्मैव, अभावस्यावस्तुत्वादित्यर्थः । यद्यपि न शाबलेयात्मा बाहुलेयः, नवा बाहुलेयात्मा शाबलेयः, अथाप्युभावप्यगोनिवृत्त्यात्मानौ तु । अनूदितं चैतत् ।

"यद्रूपं शाबलेयस्य बाहुलेयस्य नास्ति तत् ।
बाहुलेयस्य यद्रूपं शाबलेयस्य नास्ति त_ ॥
अतद्रूपपरावृत्तिर्द्वयोरपि समा मता ॥"

इति । अतद्रूपपरावृत्तिः—अगोव्यावृत्तिः ।

अपोहश्चार्थात्मा बुद्ध्यात्मा चेति द्वेधा भवति । तत्र प्रथममर्थात्मोक्तः, अथ बुद्ध्यात्मानमाह—**यथाप्रतिभासमि**त्यादिना । शाबलेयबाहुलेयादीन् विशेषान् पश्यतः स्वलक्षणैरत एव मिथो भिन्नैरपि तैर्यथाप्रतिभासमर्थप्रतिभासात्मा बुद्धावाकार उद्भवति । सोऽयमपोह उच्यते इति भावः । ननु कथमस्मिन्नपोह इति संज्ञा ? तत्राह—**अपोह्यते पृथक्क्रियतेऽस्मिन्नि**ति । उक्तं च—

"एकप्रत्यवमर्शस्य या उक्ता हेतवः पुरा ।
अभयादिसमा अर्थाः प्रकृत्यैवान्यभेदिनः ॥
तानुपाश्रित्य यज्ज्ञाने भात्यर्थप्रतिबिम्बकम् ॥
कल्पकेऽर्थात्मताभावेऽप्यर्था इत्येव निश्चितम् ॥
प्रतिभासान्तराद् भेदादन्यव्यावृत्तवस्तुनः ॥
प्राप्तिहेतुतयाऽश्लिष्टवस्तुद्वारा गतेरपि ॥
विजातीयपरावृत्तं तत् फलं यत्स्वलक्षणम् ॥
तस्मिन्नध्यवसायाद्वा तादात्म्येनास्य विप्लुतेः ॥
तत्रान्यापोह इत्येषा संज्ञोक्ता सनिबन्धना ॥"

इति ( तत्वसं० ३१७ )

दर्शितं चार्थात्मनः स्वरूपं तत्रैव—
" स्वलक्षणेऽपि तद्धेतावन्यविश्लेषभावतः " । इति ।

अथ प्रसज्यप्रतिषेधरूपमपोहमाह—**यथातत्त्व**मिति । **प्रसज्यरूपोऽपोह** इति । प्रसज्येप्रतिषेधरूपोऽपोह इत्यर्थः । उक्तं चैतत्—

' प्रसज्यप्रतिषेधश्च गौरगौर्न भवत्ययम् ।
अतिविस्पष्ट एवायमन्यापोहोऽवगम्यते ॥ '

इति ( तत्वसं० ३१८ )

28-28 **निवृत्तिमात्र**मिति । न तु निवृत्तः स हि पर्युदास इति यावत् । प्रसज्यप्रतिषेधेन ह्यपोहनमवगम्यते इत्याह—अपोहनमपोह इति कृत्वेति । प्रसज्यप्रतिषेधरूपापोहपक्षे गौरिति प्रतीतौ केवलो विधिः स्वलक्षणात्मा विषयो भवतीत्यागतं न त्वपोह इत्याशयेनाशङ्कते—नन्वित्यादिना । समाधत्ते **ने**ति । यद्यपि प्रसज्यप्रतिषेधात्माऽपोहोऽपोहनमेव, प्रत्यये विषयस्तु तद्विशिष्टो विधिरेव, न केवलं विधिरित्यर्थः । उक्तार्थदार्ढ्याय परेषां मतं निरस्यन्नाह **यत्त्वि**ति ।

29-3 **न गवात्माऽगवात्मे**ति । गवात्मायं, नागवात्मा—नागौः, इति प्रसज्यप्रतिषेधलक्षणोऽपोहः सामर्थ्यात्—अर्थापत्तेः पश्चात् प्रतीयते, प्रथमं तु विधेरेव
29-5 वस्तुनः स्वलक्षणस्यैवेत्यर्थः । तदिदं मतद्वयं लोकानुभवविरुद्धमित्याह—**तन्ने**त्यादिना ।

ननु शाब्दे व्यवहारे गौरित्येव शब्द उच्चार्यते, नान्यापोढ इति शब्दः, कथमन्यापोढस्य शब्दतः प्रतिपत्तिर्भवेत् ; अन्यः शब्दः, अन्यस्यार्थस्य तु प्रतिपत्तिरिति कथ-

29-9 मित्याशयेन शङ्कते---**यद्यपीति** । अपोह एव शब्दार्थ इत्याशयेन परिहरति---**तथाऽपीति** ।

29-14 शब्दादर्थप्रतिपत्तिकाल एवापोहोऽपि प्रतिपद्येतेत्येतद् द्रढयन्नाह—**यथाचे**त्यादिना। **प्रत्यक्षस्ये**ति । गां पश्यन् पुरुषः सपदि नायमश्व इति प्रसज्यप्रतिषेधलक्षणमभावं गृह्णात्येव, प्रत्यक्षं तु स्वयं विकल्परहितं, विकल्पोत्पादनशक्तिमत् , विकल्पोत्पादनशक्तिमत्तैव तु विकल्पग्राहिता प्रत्यक्षस्य, अतएव भवति गां पुरतः स्थितां पश्यतः सपदि नायमश्व इत्यध्यवसाय इति भावः ।

29-15 **तथा विकल्पानामपी**ति । विकल्पाः---शब्दाज्जायमाना बोधाः । प्रत्यक्षमेकं नामजात्यादिकल्पनाहीनम्, अन्यत् सर्वमेव ज्ञानमनुमानं वा शाब्दं वा भवति विकल्पात्मकमेव । तेषामेषां शाब्दानां विकल्पानामेषा तदनुरूपानुष्ठानजननशक्तिः, अनुष्ठानं प्रवृत्तिनिवृत्त्यात्मकम्, सा शक्तिरेवापोहलक्षणाभावग्रहणमुच्यते । अपोहाध्यवसाय इति यावत्। तस्मात् गामानयेति शब्दं शृण्वतः पुरुषस्य सपदि भवत्यपोढाध्यवसायः, यथाध्यवसायं च प्रवर्तते, अतः शब्दानामपोढे सङ्केत इति सुस्थितमिति भावः ।

29-18 शब्दार्थयोर्वाच्यवाचकभावस्वरूपमवधारयति—**तस्मात् स्थितमेत**दिति। **अध्यवसायादेवे**ति । अपोहाध्यवासायादेवेत्यर्थः । **शब्देन** भवत्यध्यवसायः, तस्मादेवापोढो बाह्यार्थः शब्दवाच्यो भवतीत्यर्थः । बाह्यार्थप्रतिपत्त्याधायकापोहाध्यवसायप्रयोजकतैव शब्दस्य बाह्यार्थवाचकतेति यावत् । **नतु स्वलक्षणपरिस्फूर्त्त्ये**ति । न प्रत्यक्षेणेव स्वलक्षणपरिस्फूर्त्त्याधानेनेत्यर्थः । तत्र कारणमाह—**प्रत्यक्षव**दिति । अत्राप्तसंवादमाह---**यदाहे**ति । अव्यापृताक्षस्य शब्देन स्वलक्षणस्यार्थस्य द्रष्टाविव प्रत्यक्ष इव बुद्धावप्रतिभासनादित्यन्वयार्थः। इदं च शब्दार्थयोर्वाच्यवाचकभावतत्त्वं शान्तरक्षितेन निरूपितम्—

'तत्रायं प्रथमः शब्दैरपोहः प्रतिपाद्यते ।
बाह्यार्थाध्यवसायिन्या बुद्धेः शब्दात् समुद्भवात् ।
तद्रूपप्रतिबिम्बस्य धियः शब्दाच्च जन्मनि ।
वाच्यवाचकभावोऽयं जातो हेतुफलात्मकः । '

इति तत्त्वसं. प. ३१८-३१९

व्याख्यातं च कमलशीलेन—' **प्रथम** इति । यथोक्तार्थप्रतिबिम्बात्मा । ( यथोक्तार्थश्च पर्युदासात्मकोऽपोहः ) तत्र कारणमाह—बाह्यार्थाध्यवसायिन्येत्यादि । य एव हि शाब्दे ज्ञाने प्रतिभासते स एव शब्दार्थो युक्तः, न चात्र प्रसज्यप्रतिषेधाध्यवसायोऽस्ति, नचापीन्द्रियज्ञानवत्स्वलक्षणप्रतिभासः, किं तर्हि ? बाह्यार्थाध्यवसायिनी केवलं शाब्दी बुद्धिरुपजायते, तेन तदेवार्थप्रतिबिम्बकं शाब्दे ज्ञाने साक्षात् तदात्मतया प्रतिभासनाच्छाब्दोऽर्थो युक्तो नान्य इति भावः। यश्चापि शब्दस्यार्थेन सह वाच्यवाचकभावलक्षणः संबन्धः प्रसिद्धो नासौ कार्यकारणभावादन्योऽत्रतिष्ठते; अपि तु कार्यकारणभावात्मक एवेति दर्शयति—**तद्रूपप्रतिबिम्बस्य**त्यादि । तत् अध्यवसितबहिर्भावलक्षणं रूपं स्वभावो यस्य तत्तथोक्तम्, तद्रूपं च तत् प्रतिबिम्बं चेति समासः । तस्य तद्रूपप्रतिबिम्बस्य धियः संबन्धिनः शब्दात् जन्मन्युत्पादे सति स वाच्यवाचकलक्षणो

निरूप्यमाणः कार्यकारणभावात्मक एव जातः । तथाहि–शब्दः प्रतिबिम्बस्य जनकत्वाद्वाचक उच्यते, तच्च प्रतिबिम्बं शब्देन जन्यमानत्वाद्वाच्यम् ।' इति ( तत्त्वसं. प. ३१८–३१९ )

29-24 तत्त्वतः स्वलक्षणस्य शब्दवाच्यत्वे दोषमाह–**किञ्चेति** । इदं च शब्दप्रामाण्यमनभ्युपगच्छतः स्वसमयनिष्ठान् प्रति प्रतिपाद्यते । अयमाशयः—यदि शब्दस्य तत्त्वतो बाह्यार्थवाचकता साक्षादिष्येत, तदा तस्मिन्नर्थे शब्दस्य प्रामाण्यापातेन शब्दप्रमाणतोऽवगतस्यार्थस्य सत्त्वविनिश्चयात् ‘ अयं गौरस्ती ’ ति अस्तिपदप्रयोगो व्यर्थः, नास्तीति चानुपपन्नमिति । **उपसंहरति तस्मान्न स्वलक्षणमिति** ।

शब्दश्रवणसमनन्तरं यथासङ्केतं समुपजातादुक्तलक्षणाध्यवसायाद्भवति बाह्यार्थावबोधः, तस्य सत्ता तु नावगम्यते, अत स्तदवबोधनायास्तीति पदप्रयोगोपपत्तिः ।

29-28 उक्तमर्थं शङ्कातत्परिहारमुखेन विशदयति–**नन्विति** । प्रत्यक्षात् शाब्दे वैषम्यमाह–**प्रत्यक्षस्यानिश्चयात्मकत्वादि**त्यादिना । **विकल्पस्य त्विति** । प्रत्यक्षं हि स्वलक्षणमात्रं गृह्णाति, नैकमपि विकल्पं अन्यत्तु विकल्पविशिष्टमेव, अत एव प्रत्यक्षादन्यद्विनिश्चयात्मकमेवेति, शब्दस्य चेद्बाह्यार्थे साक्षाद्वाचकता, तेन तदर्थावबोधो विनिश्चयात्मक एव स्यात्, तथा च स्वलक्षणस्य तदर्थस्य सत्ता तेनैवावधृतेति न तदवबोधनाय अस्तीतिपदापेक्षेति भावः ।

30-5 **न किञ्चित्प्रमाणमुपलभामहे**–इति । प्रमाणासंभवमेवोपपादयति–**तथाहीत्या**दिना । या व्यक्तिर्येनेन्द्रियेण गृह्यते तन्निष्ठा जातिरपि तेनैवेन्द्रियेण गृह्यत इत्येष परेषां स्वगोष्ठीनिष्ठः समयः केवलम्, न ह्युन्मीलितनयनं पश्यतोऽपि पुंसो नीलादिवर्णात् सास्नालाङ्गूलादिसन्निवेशविशेषलक्षणाकृतेश्चान्यन्नयनपथेऽवतरति । तत् सामान्ये न प्रत्यक्षं प्रमाणमिति भावः । ननु मा भूत् सामान्ये प्रत्यक्षम्, अथापि गामेकां पुरतः पश्यतोऽनुभूतानेकगोव्यक्तेः पुंसो भवति कश्चिदेकाकारपरामर्शलक्षणः प्रत्ययः, तत्र चालम्बनं किमपि निमित्तं कल्पनीयम्, अन्यथा तदनुपपत्तेस्तदेव च सामान्यमित्याशयेन परेण क्रियमाणामाशङ्कामनूद्य निरस्यति—**नन्वेति । व्यक्तिभ्य एव स्वहेतुदत्तशक्तिभ्य** इति । गवादिव्यक्तयः स्वहेतुभ्यो जायमानाः शक्तिविशेषविशिष्टा एव जायन्ते, यया मिथो भिन्ना अपि गोशब्दाभिलप्याः काश्चिदेव व्यक्तयो गौरित्येकाकारपरामर्शे हेतवो भवन्ति, तस्मान्नैकाकारपरामर्शप्रत्ययोपपत्तये सामान्यमालम्बनान्तरं कल्पनीयमिति भावः । भिन्नानामपि सतां कथमेकाकारपरामर्शप्रत्ययहेतुत्वमित्यत्राह—**भेदेऽपी**त्यादि । अत्राप्तसंवादमाह–**भेदेऽपि नियताः केचिदिति । इन्द्रियादिवदि**ति । इन्द्रियत्वाविशेषेऽपि कासाञ्चिदेव व्यक्तीनां रूपग्रहणसामर्थ्यं कासाञ्चिदेव रसग्रहणसामर्थ्यमिति यथा नियतं तथेत्यर्थः। आदिशब्दात् हरीतक्यादयो गृह्यन्ते ।

30-15 ननु सत्यपि सामान्याश्रयणस्यावश्यकत्वे किं सामान्येन, व्यक्तिभिरेवालम्, तासामेष स्वभावविशेषो यदेकाकारप्रत्यवमर्शहेतुत्वमिति स्वभावाश्रयणेनोत्तरं प्रामाणिकवस्त्वपलापायैवेत्याशङ्कां परिहरन्नाह–**किञ्चेति** ।

अयमाशयः—द्रव्यादिभ्यो व्यावृत्तं भिन्नं सामान्यमतिरिक्तः पदार्थ इति वदतां मते जातिव्यक्त्योरत्यन्तभेदो भवत्यभिमतः, गोत्वाश्वत्वादि तु सुतरां भिन्नम्, एवं भेदाविशेषेऽपि गोत्वं गोव्यक्तिष्वेव समवैति नान्यत्र, अश्वत्वमश्वव्यक्तिष्वेव समवैति नान्यत्रेत्यत्र किं नियामकमिति शङ्कायां स्वभाव एवैष गोत्वादीनां, यन्नान्यत्र समवैतीति स्वभावाश्रयणेनैवोत्तरं तैरपि देयं, तदस्मान् प्रति कोऽयमाक्षेपः स्वभावाश्रयणेनोत्तरमसंगतमिति। अस्माभिः प्रतिपाद्यमानं स्वभावाश्रयणेनोत्तरं प्रामाणिकं परैः प्रतिपाद्यमानं त्वप्रामाणिकमित्येष विशेष इति।

30-19 सामान्यसाधकतया परैराश्रितमनुमानं दूषयन्नाह—**तथेदमपर**मित्यादिना। **अत्रोच्यत** इति। साध्यं विकल्प्य दूषयति—**विशिष्टबुद्धे**रित्यादिना। **भिन्नविशेषणेति**। विशेष्यात् भिन्नं यद्विशेषणम्—विशिष्टबुद्धौ विशेष्यतया भासमानस्य यद्विशेषणतया भासते विशेष्यतो भिन्नं, तद्ग्रहणनान्तरीयकत्वमित्यर्थः।

30-22 प्रथमविकल्पे दूषणमाह—**वस्तुग्राहिणि प्रत्यक्षे उभयप्रतिभासाभावा**दिति। विशेषणविशेष्योभयप्रतिभासाभावादित्यर्थः। गौरिति यद्वस्तुप्रत्यक्षं तत् पिण्डं ततो भिन्नं गोत्वं सामान्यं चोभयमवभासयतीत्येतत् सर्वानुभवविरुद्धम्, पुरःस्थितं पश्यतो हि स्फुरति वस्तुमात्रमिति भावः।

30-24 दूषणान्तरमाह—**विशिष्टबुद्धित्वं** चेति। अनैकान्तिकतामुपपादयति—**भिन्नविशेषणग्रहणमन्तरेणापीति। यथा स्वरूपवान् घट** इति। घटस्य स्वरूपं हि घटान्नातिरिच्यते। **गोत्वं सामान्यमिति** वेति। न सामान्यं गोत्वादन्यत्, गोत्वे सामान्यत्वमिति च न गोत्वतो भिन्नं, तत्स्वरूपमेव तु तत्।

द्वितीयविकल्पे दूषणमाह—**द्वितीयेत्यादिना**। सिद्धसाधनमुपपादयति—**स्वरूपवान् घट इत्यादिव**दिति। अयं गौरिति प्रत्यक्षे वस्तुतो वस्तुमात्रग्राहिण्यपि स्वरूपवान् घट इत्यत्र कल्पितभेदमादाय विशेष्यविशेषणभावोपपत्तिवत् पिण्डादनन्यत्वेऽपि गोत्वस्य कल्पितभेदमादाय विशेष्यविशेषणभावोपपत्त्या अर्थान्तरप्रसङ्ग इति भावः। गौरयमित्यनुगतव्यवहारस्त्वगोव्यावृत्तिमेवावलम्बते, सा च व्यावृत्तिर्व्यावर्त्यान्नातिरिच्यत इत्याह—**अगोव्यावृत्त्यनुभवभावित्वा**दिति।

31-2 एवं सामान्यसाधकतया पराभिमतं प्रयोगं निरस्य सामान्यनिरासकं प्रयोगं प्रदर्शयति—**सामान्यस्य निषेधाये**त्यादिना—**यद्यत्रोपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते** इति। उपलब्धिलक्षणप्राप्तत्वे सत्यप्यनुपलभ्यमानत्वं हेतुः। हेतोरसिद्धिशङ्कां निवारयति—**नचासिद्धिसंभावने**ति।

31-6 **वर्णसंस्थानसहित**मिति। सत्यपीन्द्रियसंप्रयोगादावुपलम्भकसमवाये उपलभ्यमाने च व्यक्तिविशेषे तत्र गोत्वं विप्रतिपन्नं नैवोपलभ्यते, उपलभ्यमानं व्यक्तेः स्वरूपं तु वर्णसंस्थानात्मकम्, न ततोऽन्या गोत्वजातिरुपलभ्यते इति नासिद्धो हेतुरिति भावः।

ननु दर्शनागोचरस्यापि ज्ञानस्येव चाक्षुषोपलम्भागोचरस्यापि सामान्यस्य नासद्भाव इत्याशङ्कामनूद्य परिहरति---**नापीत्या**दिना । उपक्रान्तं सामान्यनिरसनमुपसंहरति-- **तस्मा**दिति ।

31-12 **नापी**ति । प्रसक्तानुप्रसक्तया प्राप्तोऽयं विचारः । हेतुदोषनिरूपणप्रकरणेऽसिद्धिनिरूपणावसरे सामान्यविचारः प्रसङ्गतः प्राप्तः, स च प्रासङ्गिको विचारः 'तस्मात् सर्वं संस्कृतं वस्तु परपरिकल्पितसामान्येन शून्य' मिति समुपसंहृतः । यथा संस्कृतं सर्वं वस्तु निःसामान्यकं तथा न केनाप्युपरचितमिति प्रसक्तमनुप्रसक्तमेतत् । ननु शाखाचङ्क्रमणं यत् संस्कृतवस्तुनिर्देशमनुप्रवृत्तिरस्मिन् विचार इति । नैतत् । 'यदि नित्यः कर्ता जगतो न कारणं किमस्य तर्हि कारणम्, सत्त्वानां शुभाशुभाख्यं कर्म' इत्यादिना प्रमाणनिरूपणात् प्रमेयनिरूपणेऽवतरतो द्वारमेतत्। एतेन पूर्वमेवेश्वरो जगतः कर्ता निरस्त इति पुनरुक्तमेतदिति शङ्का परिहृता, प्रकारान्तरेण तन्निषेधोऽत्र प्रवर्तत इति । तत्रेश्वरसाधकतया परोपन्यस्तस्य प्रयोगस्य निरसनमिह तु तस्य सर्गादिकर्तृत्वानुपपत्तिरिति निरसनप्रकारभेदः ।

31-13 **तत्र तावन्न नित्यो युक्त** इति । नित्यः जननमरणशून्यः । असमर्थः, अथापि कर्तेति व्याहतम्, अथ समर्थो नित्यश्च, तदा त्वयं दोष इत्याह---**नित्ये कर्तरि समर्थे सती**ति । **तदस्य स्वरूपं प्रलयकालेऽपी**ति । नहि नित्यस्य स्वरूपं कालभेदात् भिद्येत, यदि भिद्येत, तर्ह्यनित्यतैवापतेदिति भावः ।

31-16 सर्गादीनामयौगपद्यस्य सहकार्यसमवधानमूलकतामाशङ्क्य निरस्यति । **सहकारिविरहादि**त्यादिना ।

31-19 **अनित्यस्य सहकारिणोऽपि तदायत्तत्वा**दिति । कार्यमात्रं प्रति तस्य कारणत्वेन सहकारिणो जनयन्नेष नित्यः समर्थः कुतो युगपन्न जनयतीतीयमाशङ्का तत्रापि तुल्यैवेति भावः ।

31-20 ननु सत्यमेष समर्थो नित्यश्च, परमीश्वरोऽयम्, सत्यामिच्छायां कुर्यात् न चेन्न कुर्यादिति न सर्वकार्ययौगपद्यप्रसङ्ग इत्याशयेन शङ्कते---**बुद्धिमत्त्वादीश्वरस्ये**ति । अधिष्ठातृनिरपेक्षप्रधानकारणवादे सेयमाशङ्कावतरेत्, जडत्वात् तस्य, चेतनं कारणमभ्युपगच्छतोऽस्मान् प्रति तु नास्याः शङ्काया अवसर इति भावः । इच्छानां वा कुतो न यौगपद्यमित्याशयेनाह---**ता अपी**ति ।

31-24 **सहकारिलक्षणया आगन्तुकशक्तये**ति । अयमाशयः--सत्यं सहकारिण्योऽप्येतदायत्ताः, शक्तस्यास्यास्य शक्तिविशेषरूपास्ताः अयं च नित्यः समर्थश्च सर्वकार्योत्पादने, अथापि ताः सहकारिलक्षणाः शक्तयस्त्वागन्तुक्यः, अतः सर्गादीनां न यौगपद्यप्रसङ्ग इति भावः ।

स च नित्यः, सामर्थ्यं चास्याव्याहतं, सहकारि सर्वं तदधीनम्, अथापि ते सहकारिणः कादाचित्का इत्येतत् व्याहतं वच इत्याशयेनाह---**तर्हि माताऽपि सती**ति । यत्किञ्चिदेतत् असारमित्यर्थः ।

31-26 कार्यस्य स्वभावविशेषमवलम्ब्य प्रत्यवतिष्ठते---**नन्वेष एव कार्यस्य स्वभाव** इति। निरस्यति---**तन्नेति** । समर्थश्चेत् परस्वभावमभिभूयापि कस्मान्न स्वकार्यं साधयति, यदि न साधयेदसमर्थ एव स इति भावः ।

32-1 दूषणान्तरमाह---**नापीति** । स्रष्टाऽयं क्रमात् भावान् सृजतीति हि भवान् मन्यते। समर्थस्य नित्यस्य क्रमात् कार्याधानमित्यनुपपन्नम्, नैरपेक्ष्यात् समर्थत्वाच्च कर्तुरिति भावः। अत्राप्तसंवादमाह---**यदाहेति** । कालयोः---कार्यनिष्पादनकाले, अतत्काले-चेत्यर्थः । सदृशात्मनः---समर्थस्य नित्यस्य स्वरूपं हि न विपरिवर्तते जातु, तथा-सत्यनित्यतापत्तेरिति भावः ।

32-5 **एतेनेति** । नित्यानाम्---नित्यतयाऽभिमतानां जीवात्मनाम्, अक्षणिकानाम्---अक्षणिकतयाऽभिमतानां घटादीनां च । यदिदं क्रमात् कार्याधानं दृश्यते तत् स्थिर-तयाऽभिमते कस्मिंश्चिदपि न घटत इति भावः । उक्तं च शान्तरक्षितेन---

कार्याणि हि विलम्बन्ते कारणासन्निधानतः ।
समर्थहेतुसद्भावे क्षेपस्तेषां हि किंकृतः ॥

इति ( तत्त्व. प. १४९ )

अतएव कार्यक्रियासमर्थानां सर्वेषां क्षणिकतैवेति सुस्थितम् ।

32-6 ननु सर्वस्य क्षणिकतेति प्रत्यक्षविरुद्धम्, प्रत्यक्षेणाक्षणिकतैव हि गम्यत इत्या-शङ्कते---**नचात्र प्रत्यक्षविरोध** इति । अत्र प्रतिविधत्ते---**प्रत्यक्षेणेत्यादिना** । अक्षणिक-स्येति । अक्षणिकत्वस्येति यावत् । **नहीति** । अयमाशयः---प्रत्यक्षं हि साक्षात्कारः, स च क्षणिकः, यदा स्वयमुद्भवति तदा वर्तमानं वस्तुमात्रं गृह्णाति, न तस्य पूर्वापर-क्षणयोगं च, स्वयं च क्षणान्तरे विनश्यन् अनेकक्षणयोगमेकस्य गृहीतुं न कल्पते इति। पूर्वापरक्षणयोश्च न वर्तमाने साक्षात्कारकाले प्रकाशो घटेत, तथासति तयोरपि कालयोर्वर्तमानतापत्तेरित्याह---**नहि प्रागूर्ध्वमिति** । यदि पुनः प्रत्यक्षकाले पूर्वापरक्षण-योगस्यापि प्रकाश इष्येत, तर्हि साक्षात्क्रियमाणस्य वस्तुनस्तदैवाजन्मत आविनाश-मनुवर्तमानः कालान्वयोऽपि प्रकाशेत, तथासत्युत्पन्नस्य वस्तुनो विनाशावधिरपि भवतां मते विज्ञात एव भवेदित्याशयेनाह---**जन्मविनाशावधीति** ।

32-11 ननु प्रत्यभिज्ञाप्रत्यक्षं कालद्वयसंबन्धं गृह्णातीत्यत्राह---**एतेनेति** । एतेनेत्यनेना-भिप्रेतं प्रत्यभिज्ञाया अप्रत्यक्षत्वमुपपादयति---**साक्षात्कारि हि ज्ञानमित्यादिना** । साक्षात्कर्तव्यम्, साक्षात्कर्तुं क्षममिति यावत् । **नच स्मरणं प्रत्यक्षमिति** । स्मरणं प्रत्यक्षात्मकं न भवतीत्यर्थः---

32-13 अत्र कुमारिलमतं निरस्यंस्तन्मतेनाक्षिपति---**अथेति** । **इदानीन्तनमवस्थानं न साक्षात्कुर्यादिति** । अयमिति तु भवतीदानीन्तनस्य ग्रहणम्, तच्चाक्षसापेक्षम्, तदैन्द्रिकस्यास्य प्रत्यक्षताऽव्याहतैवेति, प्रत्यक्षविरुद्धा च क्षणिकतेति भावः । उक्तार्थं तस्य कारिकामनुवदति---**यदाहेत्यादिना** । **अतिरेकिणीति** । स्मृतितो भिन्ना, साक्षात्कर-प्रमेत्यर्थः ।

32-18 तदेतत् कुमारिलोक्तं प्रतिक्षिपति—**स्मरणग्रहणरूपं तर्हि प्रत्यभिज्ञानं स्यादिति**। ननु नेयं प्रत्यभिज्ञा स्मृतेरतिरिच्यते, अयमितिवत् स इत्यपि ग्रहणात्, स्मर्यमाणे च तदवस्थेऽक्षायोगात् न साक्षात्काररूपता, गृह्यमाणे चेदमवस्थे न स्मरणात्मता, तस्मात् स्मरणग्रहणोभयात्मतैव प्रसजेत्, नतु स्मृतिव्यतिरिक्तसाक्षात्कारिप्रमात्मता, उभयरूपता चैकज्ञानस्य न घटेतेति भावः।

32-20 ननु—एकमेवान्येन रूपेण स्मर्यते, अन्येन रूपेण तु गृह्यते, प्राधान्यं तु गृह्यमाणरूपतः, संस्कारसापेक्षता तु गृह्यमाणस्योपलक्षणांशे, अतः पुरस्थितवस्तुग्रहणरूपैवेयं प्रत्यभिज्ञेत्याशयेन परस्य प्रत्यवस्थानमनूद्य निरस्यति—**येन हीत्यादिना**। **अनुन्मत्तेन न शक्यते वक्तुमिति**। एकं वस्तु रूपे च भिन्ने द्वे इति वदन्नुन्मत्त एव स्यात्, रूपभेदो हि स्वरूपभेदादनन्य इति भावः।

32-22 **भावेऽपीति**। एकस्य स्मरणग्रहणभावाभ्युपगमेऽपीत्यर्थः। **प्रत्यक्षाप्रत्यक्षत्वं स्यादिति**। एकस्यैव ज्ञानस्यांशतः प्रत्यक्षत्वमंशतोऽप्रत्यक्षत्वं चापतेत्, न तु प्रत्यक्षतैवेत्यर्थः। **तस्मात्प्रत्यभिज्ञाप्रत्ययो भ्रान्त एव निर्विषयत्वादिति**। निर्विषयत्वात्—यथाऽवस्थितवस्त्वविषयत्वादित्यर्थः। आह च शान्तरक्षितः—

ननु च प्रत्यभिज्ञानं स एवेत्युपजायते।
अक्षव्यापारसद्भावे निष्प्रकम्पमबाधितम्॥
ततः प्रत्यक्षबाधेयं दुर्वारा सर्वहेतुषु।
क्षणभङ्गप्रसिद्ध्यर्थमुपात्तेषु न युज्यते॥
न खलु प्रत्यभिज्ञानं प्रत्यक्षमुपपद्यते।
वस्तुरूपमनिर्देश्यं साभिलापं च तद्यतः॥
भ्रान्तं च प्रत्यभिज्ञानं प्रत्येकं तद्विलक्षणम्।
अभेदाध्यवसायेन भिन्नरूपेऽपि वृत्तितः॥

इति (तत्त्व. प. १९७)

32-24 प्रत्यभिज्ञाया भ्रमत्वे प्रयोगमाह—**प्रयोगश्चैवमिति**। **स तत्त्वतो नैकालम्बन इति**। तत्त्वतो नाभिन्नालम्बनः, अध्यस्ताभेदालंबन इति यावत्। **विरुद्धव्याप्तोपलब्धिरिति**। विरुद्धव्याप्तोपलब्धिमुपपादयति—**एकत्वानेकत्वयोरित्यादिना**। एकत्वानेकत्वयोः—भेदाभेदयोः। विषयविरोधाद्विषयिणोरप्युपलम्भयोर्विरोध इत्याह—**तद्विषययोरपीति**। **न प्रत्यभिज्ञानं क्षणिकानुमाने बाधकमिति**। भ्रान्तित्वादिति भावः।

32-29 विरुद्धव्याप्तिर्नास्तीत्याशङ्कते—**न चेति**। **अत एवेति**। अयमाशयः—ननु विरुद्धोऽयं हेतुः—प्रत्यभिज्ञा हि देशान्तरे कालान्तरे वाऽनुभूतस्य तद्देशकालयोगं तदेवेदं नीलमिति गमयति, औत्सर्गिकमेतत्। लूनपुनर्जातादिषु च सामान्यैक्यम्, तदेवं प्रत्यभिज्ञात्वं नैकालम्बनत्वस्य विरुद्धम्, वह्नेरिव जलम्, विरोधादेव चानैकान्तिकताऽपीति चेन्न। स्थिरस्य क्रमेणाक्रमेण वा क्रियाकारित्वमनुपपन्नमित्यसकृदुक्तमेव, तत् प्रत्यभिज्ञानस्यैकालम्बनत्वं नैवोपपद्यते इति न विरुद्धत्वमनैकान्तिकता वेति। ननु प्रत्यभिज्ञानमेव स्वरसतो वस्त्वैक्यमवगमयति, नैव, तस्यैकालम्बनत्वं किं युक्तं न वेत्येतदेवाद्य विचार्यत इति प्रत्यभिज्ञानतो वस्त्वैक्योपपादनमनुपपन्नमित्याह—**नच प्रत्यभिज्ञानमेवेति**। जगतो

33-5 बुद्धिमद्भिरचितत्वासंभवमुपक्रान्तमुपसंहरति—**तस्मात् स्थितमेतदि**ति।

33-8 **सत्त्वलोक**मिति। सत्त्वानि–प्राणिनः, तल्लक्षणो लोकः सत्त्वलोकः। भाजन लोकः–सत्त्वानां प्राणिनां भाजनभूतः– आश्रयभूतो लोको भाजनलोकः, तदिमं मतिविचित्रं चित्तमेव रचयति–चित्तं बुद्धिर्ज्ञानमिति पर्यायाः। चित्तमेव बाह्यात्मना भासत इति चित्तविलास एव सर्वमिति भावः। कर्मजं हि जगदुक्तमशेषं। कर्म चित्तमवधूय न चान्यत्–द्विविधं सत्यं–पारमार्थिकसत्यं सांवृतिक सत्यं चेति। तत्र पारमार्थिक–दृष्टया तु चित्तमेव सर्वस्य मूलम् सांवृतिदृष्टया तु अशेषं जगत् सत्त्वानां कर्मणा जातम्। तदेवं कर्म चित्तं चेत्युभयं विना जगतो न किञ्चिन्मूलमिति भावः। वैभाषिकमतमाश्रित्येत्येतद्वक्तुर्दृष्टया, वैभाषिकाद्यवान्तरभेदो हि भगवतः पश्चात्तनः यद्वचनमाश्रित्य वैभाषिकाः प्रवर्तन्ते इति यावत्।

33-12 अथ सर्वज्ञं साधयन् परस्याशङ्कामनुवदति–**नन्विति**। किं प्रमाणम्–प्रमाणं नास्तीत्यर्थः। **अस्ति** प्रमाणमनुमानमित्यभिप्रायेणाह–**उच्यते** इति

33-13 चत्वार्यार्यसत्यानि तेषां साक्षात्कारो यस्य भवति स सर्वज्ञः, साक्षात्कारश्च स्फुटावभास इत्यभिप्रायेण तेषां स्फुटावभासे प्रयोगं दर्शयति–**यो य** इत्यादिना। व्याप्त्यवबोधकं प्रथमं वाक्यम्, द्वितीयं च पक्षधर्मतावबोधकम्, तत्र सादरनिरन्तरदीर्घकालाभ्याससहितचेतोगुणता हेतुः, स्फुटीभावयोग्यता साध्यम्, उदाहरणं कामिन्याकारः कामुकचित्तगतः, चतुरार्यसत्यविषयाकाराः बोधिचित्तगताः पक्षः, स्वभावहेतुनाऽनेन चतुर्णामार्यसत्यानां स्फुटीभावयोग्यत्वे सिद्धे स्फुटावभासासंभवनिरसनमुखेन सर्वज्ञासिद्धिर्निरस्ता भवति।

इदमत्र बोध्यम्। सर्वज्ञे प्रमाणं नेति वदतोऽयमाशयः—न तस्मिन् प्रत्यक्षं प्रमाणम्, न हि दृश्यते कश्चित् सर्वदर्शी, नाप्यनुमानम्, दृष्टसजातेयेष्वेव तत्प्रसरात्, न च शब्दः, तद्बोधके प्रामाण्यसंशयात्। सर्वज्ञता च न घटते। न ह्यतीन्द्रियानर्थान् कश्चिद् द्रष्टुं शक्नोति, इन्द्रियायत्तप्रकाशा ह्यर्थाः, प्रज्ञाप्रकर्षेऽपि नेन्द्रियार्थयोः स्वभावं समतिलङ्घ्य किञ्चित् कश्चित् ज्ञातुं शक्नोति। उक्तं च—

येऽपि सातिशया दृष्टाः प्रज्ञामेधाबलैर्नराः।
स्तोकस्तोकान्तरत्वेन न त्वतीन्द्रियदर्शनात्॥
प्राज्ञोऽपि हि नरः सूक्ष्मानर्थान् द्रष्टुं क्षमोऽपि सन्।
स्वजातीननतिक्रामन्नतिशेते परान्नरान्॥

इति। तत्त्वसं. प. ८२९)

तस्मादभ्यासातिशये सत्यपि निरवधावर्येन्द्रिययोः स्वभावातिलङ्घनं दुर्घटमेव। यत्तु योगाभ्यासबलादतीन्द्रियार्थदर्शनं घटेतेति, तदप्यनुपपन्नम्, सोऽपि विचार्यमाणोऽनवरतानुध्यानलक्षणः अविच्छिन्नस्मृतिधारारूपः स्वयं न साक्षात्कारात्मा, स्मृतिरप्यनुभूतार्थावलंबनीति न योगाभ्यासतोऽप्यतीन्द्रियार्थसाक्षात्कारितेति न सर्वज्ञः सिद्ध्यतीति। सर्वज्ञं समर्थयतस्त्वयमाशयः—यावन्न बाधकमुपलभ्यते, तावन्नास्तीति न निश्चीयेत, न ह्यदृष्टिमात्रेणार्थस्यासम्भवः, तत् सर्वज्ञे प्रत्यक्षादिप्रमाणानु-

पलम्भमात्रेण कथं तत्प्रतिषेधः कर्तुं शक्येत, न च स्वाप्निकानां तत्तत्पुरुषमात्रवेद्यानामपरैरनुपलभ्यमानानामपलापः कर्तुं शक्येत। यावद्बाधकं नोपलभ्यते तावत् तत्र संशयस्तु स्यादेव, एवं सति कथं भवान् सुगतसार्वज्ञ्यं प्रतिषेद्धुं प्रभवति। ननु बाधकं प्रदर्शितम्–'सर्वज्ञता च न घटते' इत्यादिना। अत्रोच्यते–न किमपि दौर्घट्यम्। यश्चायं स्वभावविशेष इन्द्रियार्थयोः चक्षू रूपमेवगृह्णीयात्, न श्रोत्रादि श्रोत्रं शब्दमेव गृह्णीयान्न रूपम्, 'एवं रूपं चक्षुषैव गृह्येत नेतरेणेन्द्रियेण, शब्दः श्रोत्रेणैव नेतरेणेन्द्रियेणेति। सत्यम्। इन्द्रियेण चेद् गृह्येत तदा तथैव, चित्तेन चेत् नायं नियमः। ननु मनो नामान्तरमिन्द्रियं बाह्येन्द्रिय द्वारेणैवार्थे प्रवर्ततेत्यनुल्लङ्घनीयो नियमः। मैवम्। न मनो नामेन्द्रियं किञ्चिदान्तरं, मनश्चित्तं बुद्धिर्विज्ञानमित्यनर्थान्तरम्। प्रतिसत्त्वं भिन्ना चित्तधाराऽनुवर्तते, सैव च रागादिविविधमलाविला भवति, आविद्यं च मलजालमागन्तुकम्। नैरात्म्यभावनया चापचीयते, चतुरार्यभावनया च भवति प्रकर्षः, यथा, यथा नैरात्म्यभावनयाऽपचीयन्ते रागादयो मलास्तथा तथा चतुरार्यभावनया च प्रकर्षं गतया प्रवर्धते प्रज्ञा, अनेकभवानुस्यूतसादरनिरन्तरार्यसत्यभावनया काष्ठां गतया योगलक्षणया भवति चतुर्णामप्यार्यसत्यानामपरोक्षम्, योगजमपि हि प्रत्यक्षम्, स्फुटावभासत्वात्। इन्द्रियार्थस्वभावनियमस्त्वैन्द्रियके नापरोक्षमात्रे। चतुरार्यापरोक्षेण भवति सर्वज्ञः। सादरनिरन्तराभ्यासात् प्रज्ञाप्रकर्षो भवतीत्यत्र तु भवत्ययं प्रयोगः— 'यो यः सादरे' त्यादि रिति।

33-14 **यथा युवत्याकारः कामिनः पुरुषस्ये**ति। स्फुटावभासयोग्य इति शेषः। कामिचित्तं भवति काम्यमानाकारम्, तस्मात् काम्यमानयुवत्याकारश्चित्तस्य गुणो भवति, सोऽयं कामिचित्तगुणभूतो युवत्याकारः सादरनिरन्तरदीर्घकालाभ्याससहितः स्फुटीभावयोग्यो भवति ( स्फुटावभासो भवति ) तथा विवेकिनश्चित्तं विभाव्यमानचतुरार्यसत्याकारं भवतीति सोऽयं चतुरार्यसत्याकारश्चेतोगुणभूतः सादरनिरन्तरदीर्घकालाभ्याससहितः स्फुटावभासयोग्यो भवति, स्फुटावभासे च तदपरोक्षतः सर्वज्ञो भवतीति।

कानि चतुरार्यसत्यानि? दुःखं समुदयो निरोधो मार्गश्चेति। रूपस्कन्धो वेदनास्कन्धः संज्ञास्कन्धः संस्कारस्कन्धो विज्ञानस्कन्ध इति तदेतत् स्कन्धपञ्चकं दुःख मुच्यते। येनास्य स्कन्धपञ्चकस्य समुदयः सोऽयं समुदयः, यो निरोधो दुःखस्य स निरोधः, निरोधस्यास्य यत् द्वारं स मार्ग उच्यते।

33-16 हेतोर्दूषणत्रयरहिततामुपपादयंस्तत्राश्रयासिद्धिहेत्वसिद्धिराहित्यमुपपादयति **न तावदाश्रयद्वारेणेति**।

**धर्मिणाम्**–आश्रयाणां पक्षतया निर्दिष्टानाम्। ते हि सङ्कल्पपथमारूढा दुःखाद्यार्यचतुष्टयाकाराः प्रत्यात्मं चेतस्तले प्रकाशन्त एवेति नाश्रयासिद्धिः। **चेतोगुणमात्रस्येति**। मात्रशब्दः कृत्स्नार्थः। चित्तस्यालम्बनाकारतया आलम्बनमात्रं चित्ताकार एवेति ते चेतोगुणाः प्रत्यात्मं प्रकाशन्त एवेति न हेत्वसिद्धिः। धर्मिणि च सादर निरन्तरदीर्घकालाभ्यासविशिष्टचेतोगुणतायाः संभवेन पक्षधर्मता न नोपपद्यते।

33-18 **नचैष विरुद्ध इति** । **कामिन्याकारे**—कामिनि चित्ते योऽयं युवत्याकारस्तस्मिन्, कामिन्या युवत्या आकारे कामिनाऽनुध्यायमाने इति वा । विरोधो हि साध्याभावेन चेद्व्याप्तो हेतुः, न चेह तथा, सादरनिरन्तरदीर्घकालाभ्यासविशिष्टा ये ये चेतोगुणा युवत्याकारादयस्ते सर्वेऽपि स्फुटावभासयोग्या एव न तु सर्वे ते स्फुटावभासायोग्याः । ननु सादरनिरन्तरदीर्घकालाभ्यासविशिष्टेषु कतिपयचेतोगुणेषु स्फुटावभासयोग्यत्वदर्शनेऽपि सर्वेषां तथात्वे को नियमः, तस्मादनैकान्तिकोऽयं हेतुरिति शङ्कां वारयन्नाह—**नचानैकान्तिक** इति । न वयं सहचारदर्शनमात्रेण व्याप्तिं ब्रूमः, किन्तु कार्यकारणभावात् प्रतिबन्धादित्याह—**अभ्यासेत्यादिना** । कार्यकारणभावो वा कथमेतयोः सिद्ध्यतीत्यत्राह—**प्रत्यक्षानुपलम्भत** इति । प्रत्यक्षानुपलम्भाभ्यामित्यर्थः । कार्यकारणभावस्त्वन्वयव्यतिरेकसहचाराभ्यां सिद्ध्यति, तत्रान्वयसहचारः प्रत्यक्षगम्यः, व्यतिरेकसहचारोऽनुपलम्भगम्यः, इत्थं च सर्वोपसंहारेण प्रत्यक्षानुपलम्भाभ्यां तयोः कार्यकारणभावः सिद्ध्यतीति कार्यकारणभावलक्षणात् प्रतिबन्धाद्व्याप्तिसिद्धिरिति भावः । प्रकृते प्रत्यक्षानुपलम्भावुपपादयति-**तथाहीति** । **काम्यन्तर्वर्त्तिनि**—कामिचित्तान्तर्वर्त्तिनि । **त्रिविधप्रत्यक्षानुपलम्भसाध्य** इति । प्रत्यक्षं अनुपलंभश्चेत्यनयोः समाहारः प्रत्यक्षानुपलम्भं, अनुपलब्धिः स्फुटाभत्वस्येतीयमेकाऽनुपलब्धिः, पश्चादभ्याससंवेदनं स्फुटभससंवेदनं चेति प्रत्यक्षद्वयं, तैरेतैस्त्रिभिः प्रकारैर्युक्तः प्रत्यक्षानुपलम्भसमुदायः, तत्साध्यः कार्यकारणभाव इत्यर्थः । इदमत्रावेद्यते—यथा पश्चादभ्याससंवेदनं स्फुटाभसंवेदनं चेति प्रत्यक्षद्वयम् तथा पूर्वमभ्यासविशिष्टचेतोगुणानुपलम्भः स्फुटावभासानुपलम्भश्चेत्यनुपलम्भद्वयं किं न स्यात्, वस्तुतस्तु स्वेतरयावत्कारणसमवधाने सत्यपि यस्मिन्न सति कार्यानुपलम्भ इत्येकोऽनुपलम्भः,सति तु यस्मिन् कार्योपलम्भ इति प्रत्यक्षमेकम्, इत्थं च प्रत्यक्षानुपलम्भाभ्यां कार्यकारणभावावधारणमिति तु युक्तम् । एवं स्थिते कारणोपलम्भं कार्योपलम्भं च पृथक् गणयित्वा प्रत्यक्षद्वयं चेत् संपाद्येत कारणानुपलम्भं कार्यानुपलम्भं च पृथग्गणयित्वाऽनुपलम्भद्वयाश्रयणेन चातुर्विध्यं किं न स्यात् । अनयैवाशङ्कया पूर्वं 'कार्यहेतोर्धूमादेर्वह्न्यादिना महानसादौ दृष्टान्तधर्मिणि त्रिविधप्रत्यक्षानुपलम्भेन पञ्चविधप्रत्यक्षानुपलम्भतो वे'त्येतद्वाक्यं प्रकारान्तरेणोन्नीतम् । निबन्धकारस्य तु हार्दमिह पश्यतां नः पूर्वव्याख्यानं निबन्धकर्तुर्हार्दं नानुसरतीति ।

33–27 शङ्कते **नन्विति** । चतुरार्यसाक्षात्कारित्वसिद्धावपि न सर्वसाक्षात्करित्वं संभवति अथ कथं सर्वज्ञतासिद्धिरिति शङ्कितुराशयः यद्यपि चतुर्ष्वार्यसत्येष्वनन्तर्गतो नैकोऽपि भावः । अथापि सर्वज्ञतां व्यक्तं प्रसाधयन् शङ्कते—**अशेषेणेति** । साकल्येनेत्यर्थः । **सर्वधर्मे**ति । धर्मशब्दो भावमात्रवचनः, कार्यकारणभावापन्नं यद्बीजाङ्कुरादि यच्च चित्तचैत्तं स धर्म इति परिभाष्यते ।

34–2 **यत्प्रमाणसंवादी**ति । प्रमाणसंवादिनिश्चितार्थवचनत्वं हेतुः, तदर्थसाक्षात्कारपूर्वकत्वं साध्यम् । **साक्षात्कारिज्ञान**मिति । साक्षात्कारि यद् ज्ञानमित्यर्थः । **साक्षात् पारम्पर्येण**वेति । साक्षात्कारपूर्वकत्वं साक्षात् पारम्पर्यण वेत्यर्थः । अग्नेर्दाहकत्वं स्वयं साक्षात्कृत्य प्रोच्यमाने साक्षात्, तथाविधज्ञानपूर्वकत्वं स्वयमननुभूय साक्षात्कर्तुर्वचनेप्रामाण्यमनु प्रयुज्यमाने परम्परया, तथा सुगतानुयायिनां 'क्षणिकः सर्व एव संस्कारा' इत्यस्मिन् वचने च । **कार्यहेतुरि**ति । उक्तवचनस्योक्तसाक्षात्कारकार्यत्वात् ।

34–5 हेतोरसिद्ध्यादिदूषणत्रयराहित्यमुपपादयति **नास्यासिद्धिरि**त्यादिना । **सर्वधर्मक्षणभङ्गप्रसाधनादस्य वचनस्येति**। क्षणभङ्गो हि सर्वधर्माणां स्वभावः तदर्थावबोधकतया चास्य वाक्यस्य प्रमाणसंवादिनिश्चितार्थावबोधकत्वरूपहेतोर्नासिद्धिरिति भावः। प्रमाणनिश्चितार्थकत्वस्य हेतुविशेषणस्य प्रयोजनं प्रकाशयन्ननैकान्तिकतां वारयति—**वचनमात्रस्य संशयविपर्यासपूर्वकत्वेऽपीति** । **प्रमाणनिश्चितार्थस्येति**। प्रमाणेन निश्चितोऽर्थो यस्य तस्य वाक्यस्येत्यर्थः । नन्वनयोर्व्याप्तौ किं प्रमाणम्, तत्राह—**प्रत्यक्षानुपलम्भाभ्या**मिति। प्रमाणसंवादिवचनं हि स्वार्थसाक्षात्कारकार्यम्, कारणे सति कार्योपलम्भः, असति कारणे कार्यानुपलम्भ इति प्रत्यक्षानुपलम्भाभ्यां कार्यकारणयोर्व्याप्तिर्निराबाधा गृह्यत एवेति भावः, तत्रापि चेदाशङ्का, कार्यहेतुमात्रोच्छेदप्रसङ्ग इत्याह **अन्यथेति** ।

अत्रायं सर्वज्ञसमर्थनसङ्ग्रहः । प्रकाशितपूर्वश्चास्माभिरन्यत्र—

प्रमाणानां निवृत्त्या तु प्रमेयं न निवर्तते ।
अव्यापकनिवृत्त्या स्यान्नाव्याप्यस्य निवर्तनम् ।
सा प्रमाणनिवृत्तिश्च क्वचिद् दृष्टा न साधनम् ।
सर्वप्रमातृसन्दोहे तद्दृष्टिस्तु सुदुर्ग्रहा ।
सर्वज्ञे बाधकं नापि प्रमाणमुपलभ्यते ।
ये नाम बोधिसत्त्वाः स्युः प्रकृत्यैव कृपामयाः ।
अशेषधर्मनैरात्म्यभावनाभ्यासपाटवात् ।
व्यपेतसर्वावरणा रागादिमलवर्जिताः ।
प्रज्ञाप्रकर्षयोगेन सार्वज्ञ्यं समुपागताः ।
कृपाप्रकर्षयोगेन सर्वसत्त्वोद्दिधीर्षया ।
आसंसारं वर्तमानाः स्वच्छस्फटिकनिर्मलाः ।
दोषवातैरप्रकम्प्यास्ते बुद्धा जगतो हिताः ॥ इति

34–12 **भवपरम्परासिद्धये तु किं प्रमाण**मिति । किं शब्दः प्रतिक्षेपे–प्रमाण नास्तीत्यर्थः लोकायत तानुयायिनः सेयमाशङ्का । अन्येस्तदप्रतिक्षेपात् । अयमभिप्रायः—अस्तु नाम ये स्थिरमात्मानमभ्युपगच्छन्ति तेषां कथमपि पुनर्भवप्रत्याशा । सर्वस्य क्षणिकतां वदतः कथं पुनर्भवकथा घटेतेति। प्रतिविधत्ते-**उच्यते** इत्यादिना। क्षणभङ्गवादिभिरस्माभिरप्यहंप्रत्ययास्पदभूता विज्ञानधारा प्रतिसत्त्वं भिन्नाऽनुवर्तत एव भवे भव इत्यभ्युपगतं नाम, पूर्वपूर्वचित्तस्यैष स्वभाव उत्तरोत्तरं चित्तं जनयतीति, तस्मात् मरणकालभाविचित्तस्यापि चित्तान्तरोत्पादकत्वमस्त्येव । अत्रायं प्रयोगो भवतीत्याशयेनाह–**यच्चित्तं तच्चित्तान्तरं प्रतिसन्धत्ते** इति। उत्पादयतीत्येतत् । अयं चोत्पाद्योत्पादकभाव एकसन्तानान्वयिनोरेव पूर्वापरचित्तयोः । मरणकालभावि चित्तं पक्षः, चित्तान्तरोत्पादकत्वं साध्यं चित्तत्वं हेतुः । इदानीन्तनचित्तं दृष्टान्तः ।

**न चार्हच्चरमचित्तेन व्यभिचार** इति । अर्हतामपगतरागादीनां चरमं चित्तं चित्तान्तरं नोत्पादयतीति सौगतैरपीष्यत इति तस्मिंश्चित्ते व्यभिचार इति भावः ।

इमामनैकान्तिकाशङ्कां परिहरति—**तस्यागममात्रप्रतीतत्वा**दिति । अयमाशयः—परकीयागमैकसिद्धेनार्हच्चरमचित्तेनानैकान्तिकाशङ्का परागमस्याप्रामाण्यं वदता नोद्भाव्या, परमताभ्युपगमेन चेदभ्युपगम्यतां तथैव पुनर्भवोऽपीति । **निष्क्लेशचित्तान्तरजनना**द्वेति । अयमाशयः—न सौगतानां सर्वेषामभिमतमेतत् अर्हतो भवति चरमं चित्तं, यच्चित्तान्तरं नोत्पादयतेति, केचित् कथयन्ति नामैवम् । वस्तुतस्तेषामपि वीतरागाणां व्यपेतसकलाविद्यामूलानां क्लेशादिमलैरनालिप्ता विमला चित्तसन्ततिरनुवर्तत एवेति नानैकान्तिकप्रलङ्ग इति । उक्तं च शान्तरक्षितेन—

क्षीणास्रवस्य विज्ञानमसन्धानं कुतो भवेत् ।
परकीयकृतान्ताच्चेन्न, प्रामाण्यापरिग्रहत् ॥
ये चेह सुधियः केचिदप्रतिष्ठितनिर्वृतीन् ।
जिनां स्तद्यानिष्ठत्वं यानयोश्च प्रचक्षते ॥
तान् प्रत्ययमसिद्धश्च साध्यधर्मसमन्वितः ।
दृष्टान्तः प्रतिवादीष्टसिद्धान्ताश्रयणेऽपि ते ॥

इति (तत्त्वसं. ९३८-९३९)

कमलशीलेन चेत्थं व्याख्यातम्—' कुतः प्रसिद्धमर्हतां न चित्तान्तरं प्रतिसन्धत्ते मरणचित्तमिति, अथाऽपि स्यात् परकीये बौद्धसिद्धान्ते पठ्यते क्षीणा मे जातिरुषितं ब्रह्मचर्यं कृतं करणीयं नापरमस्मात् भवं प्रजानामीति, अतः सिद्धमसाधनमिति, तदेतदयुक्तं ' परकीयस्य सिद्धान्तस्य प्रामाण्येनापरिग्रहात्, कथं तथाऽप्रामाण्येन परिगृहीतान्निश्चयः, परलोकस्यापि निश्चयप्रसङ्गात् । × × × × परसिद्धान्ताश्रयणेनापि कांश्चिद् बौद्धान् प्रति साध्यधर्मसमन्वितो न सिद्धो दृष्टान्त इति दर्शयन्नाह—येचेह सुधिय इती'ति ( तत्त्वसं. पञ्जि. ९३८–९३९ )

34-15 तुष्यत्वितिन्यायेनाह—**हेतोर्वा क्लेशे सतीति विशेषणापेक्षणा**दिति । रागादिमलकलुषितचित्तत्वस्य हेतुतेत्यर्थः । अर्हन्मरणचित्तं तु न तथाविधमिति नानैकान्तिकतेति भावः । तथाचोक्तं शान्तरक्षितेन—

मरणक्षणविज्ञानं स्वोपादेयोदयक्षमम् ।
रागिणो हीनसङ्गत्वात्पूर्वविज्ञानवत्तथा ॥

इति ( तत्त्वसं. ९३९ )

व्याख्यातं चैतत् ' यत्सरागं चित्तं तत्स्वोपादेयचित्तान्तरोदयसमर्थम्, सरागत्वात्पूर्वचित्तवत् सरागं चेदं मरणचित्त'मिति ।

34-16 मरणकालभाविचित्तस्य चित्तान्तरोत्पादकत्वं प्रसाध्य जन्मकालभाविनश्चित्तस्य स्वोदयहेतुभूतचित्तपूर्वकत्वं प्रसाधयन्नाह—**इहे**त्यादिना पूर्वोत्तरभवद्वयसमर्थनेन अनेकभवान्वयो दृढीकृतो भवति । भाविभवसाधकोहेतुः स्वभावहेतुः, भूतभवसाधकस्त्वयं कार्यहेतुरित्याह—**कार्यहेतु**रिति ।

34-19 ननु प्रतिसत्त्वं विज्ञानधारा प्रवहति साचानेकभवानुवर्तिनी, सर्वज्ञाश्च बहवो बुद्धाः इत्यादिभेदवर्णनं कथं घटते, शून्यमेव तु तत्त्वमिष्टम्, शून्यतादृष्टिरेव तु मुक्तिरिति च तात्त्विकी स्थितिरित्याशयेन शङ्कते—**ननु**चेति । शङ्कातन्निरसनमुखेन वैभाषिकादिमतभेदमवतारयति नाम । सत्त्वान्—लोकान् । सर्व एवाविद्यावशात् स्थिरविवि-

धभाववासनाकलुषितचेतसः सपदि श्रेयःपथे नावतारयितुं शक्यन्ते, तानेतानद्वये नैःश्रेयसपथेऽवतारयता भगवता करुणार्द्रचित्तेन भूतार्थतयेदमुक्तमिति । अयमाशयः — अविद्ययाऽऽवेष्टितान् दृष्टमात्रेषु अविचार्य तत्तत्त्वमिदमिदमिति धावतोऽनर्थे निपततो लोकान् शून्यतादृष्टौ सपद्यावतारयितुमशक्यतया यदिदं दृश्यते तदेतत् स्कन्धायतनादि, सर्वं क्षणिकं न स्थिरमेकमिति क्षणिकत्वोपदेशः प्रथमतः प्रवृत्तो भगवनः, ततश्च तान् ज्ञानज्ञेयभेदवासनाकलुषितान् ततोऽवतारयितुं विज्ञानमात्रोपदेशः, ततो विज्ञानाद्वैतदृष्टेरवतार्य शून्यतादृष्टौ नैःश्रेयसैकान्तायां लोकान्वर्तयितुं सर्वं शून्यमिति सर्वशून्यतोपदेशः । तदेवं सांवृतासांवृतभेदमाश्रित्य क्षणिकं क्षणिकं विज्ञानं विज्ञानं शून्यं शून्यमितिचोपदेशभेदः प्रवृत्त इति । तथाचोक्तम्—लोकावतरणार्थं च भावा नाथेन देशिताः । इति ।

34-23 विनेयजनावतरणाय प्रवृत्तमुपदेशभेदमवलम्ब्य सौगतेषु मतभेदः प्रवृत्तः स च वैभाषिकादिभेदाद्भिन्नः । तान् भेदान्निरूपयन्नाह—**तथाहीत्यादिना** । **आकाशं द्वौ निरोधौ चेति** । द्विविधं वस्तु—संस्कृतमसंस्कृतं च, तत्रासंस्कृतमाकाशं द्वौ च निरोधौ—प्रतिसङ्ख्यनिरोधोऽप्रतिसङ्ख्यानिरोधश्चेति । संस्कृतं सर्वं तु क्षणिकमिति भावः ।

अथ सौत्रान्तिकानां मतमाह—**सौत्रान्तिकानां मत**मिति । **न बाह्योऽर्थ** इति । नीलादिर्बाह्योऽर्थो न प्रतिभाति, अस्ति तु बाह्योऽर्थः, स च न दृग्गोचरः, यदिदं नीलमितिभासते, सङ्क्रान्तबाह्याकारं ज्ञानमेव तु तदिति भावः । ज्ञानानुमेयबाह्यार्थवादिन एते । **स्वाकारबुद्धिजनका** इति । दृश्याः — दृश्यतयाऽभिमाताः —बाह्या इत्येतत । नीलादयो बाह्यार्थः स्वाकारं बुद्धौ समर्प्य स्वयं नश्यन्ति, प्रकाशते तु ज्ञानमेव, जडस्य प्रकाशायोगादिति । **यदि संवेद्यत** इति । नीलादि यदि संवेद्यते—वित्तौ प्रकाशते, तर्हि प्रकाशस्वभावतया तदपि चित्तवदाभ्यन्तरमेवेति कथं तद् बाह्यमुच्यते । अयमर्थः — नीलमिति यत्प्रकाशते तत्किमिति वक्तव्यम् । चक्षुःपथे यन्निपतितं तस्य च चित्तस्य च कः संबन्धः यच्चित्तेन गृह्येत, वस्तुनि नयनपथमुपगतमात्रे भवति नीलमित्यवभासः, स च चित्तस्यैव प्रकाशः, अतो गम्यते नीलाकारावभासश्चित्तस्यैवेति । न चेत् संवेद्यते –यदा च न संवेद्यते, नयनपथसंनिकृष्टमनु जायमानेन न विषयी क्रियते, अथ कथं तस्य बाह्यता—बहिरिन्द्रिय जन्यप्रत्यक्षगोचरता । तथा च बाह्यानामप्रत्यक्षत्वं सिद्धमिति ।

35-4 यदि बाह्योऽर्थः प्रत्यक्षप्रमाणेन न गृह्यते तर्हि तस्मिन् प्रमाणाभावाद् विज्ञानमात्रमेव वस्त्वितीष्यताम्, इत्याशयेन शङ्कते—**ननु यदी**ति । परिहरति—**व्यतिरेकत** इति । ज्ञानादर्थस्य नीलादेर्व्यतिरेकात् । व्यतिरेके कारणमाह—**नहीत्यादिना** । **नैतत्**दिति । एतत्—उत्तरोत्तरचित्ते पूर्वपूर्वचित्ततो निरन्तरमनुवर्तमानेऽपि क्वचिदेव देशे क्वचिदेव समये नीलावभासो नान्यदा नान्यत्रेत्येतत् । स्वोपादानपूर्वपूर्वचित्तबलमात्रभावित्ये न युज्यते । **समनन्तरप्रत्ययव्यतिरिक्त**मिति । समनन्तरपूर्वप्रत्ययव्यतिरिक्त मित्यर्थः ।

35-9 एवं वैभाषिकसौत्रान्तिकाभिमतं बाह्यास्तित्वपक्षं निरूप्य, अथ योगाचारमतं विज्ञानमात्रास्तित्वपक्षं निरूपयन् बाह्यस्तित्ववादं विकल्प्य दूषयति—**कः पुनरसौ बाह्योर्थ** इति ।

किमवयवी, किं वा परैर्द्रव्याश्रितत्वेनाभिमता गुणादयः, किं वा नवविधं द्रव्यं किं वा परमाणव इति विकल्पार्थः । यद्यप्यवयव्यादिविभागो वैभाषिकसौत्रान्तिकाभ्यां नाद्रियते अथापि विज्ञानमात्रास्तित्ववादिना बाह्यार्थमात्रस्य निरसनीयतया तेषामप्युपादानम् । अन्ते परमाणूनां निवेशः अवयविनिरसनपूर्वकं परमाणुमात्राभ्युपगमं वैभाषिकसौत्रान्तिकयोर्विशेषमभिप्रेत्य । प्रथमं निर्दिष्टोऽप्यवयवी अत एवान्ते निरस्यते, तन्निरसनसमनन्तरं परमाणुवादे समवतरणं समुचितमिति ।

35-12. **तत्र न तावद्गुणादय** इति । आदिशब्दात् क्रियादेः परिग्रहः **द्रव्यनिषेधनव तेषां निषिद्धत्वादिति** । कथं द्रव्यनिषेधेनैव तन्निषेधः आह—**न चासति समवायिनि द्रव्ये** इति । अतएव सत्यापि दूषणान्तरे तन्नादृतमत्रास्माभिरित्याह—**दूषणमपि नाद्रीयत** इति । पृथग् दूषणं सदपि नाद्रीयते इत्यर्थः । द्रव्यस्य कथं निषेधस्तत्राह—**द्रव्यं चेत्यादिना** ।

35-13. **तत्रात्मनिषेधायदमपि साधनमिति** पूर्वमेवात्मनिरसनं कृतम्, इदमपि तन्निरसनसाधनमित्यपिशब्देन गम्यते । **यत् कादाचित्कं ज्ञान**मिति । इदं च व्याप्तिनिदर्शकमुदाहरणवाक्यम् । कादाचित्कज्ञानत्वं हेतुः, कादाचित्ककारणपूर्वकत्वं साध्यम्, व्याप्तावुदाहरणं सौदामिनीज्ञानवदिति । **कादाचित्कं चेदमहङ्कारज्ञान**मिति पक्षधर्मतोपपादकमुपनयवाक्यम् । अनेनाहंग्रहहेतुभूतस्याहमर्थस्य कादाचित्कत्वसिद्ध्या आत्मा नित्योऽस्तीत्येतन्निरस्तं भवतीति भावः। असिद्धयादिदोषत्रयरहिततां हेतोर्निरूपयति—**नायमसिद्ध** इत्यादिना । **अहङ्कारे धर्मिणी**ति । अहङ्कारे—अहंग्रहे धर्मिणि—पक्षे । हेतोर्विशेष्यांशासिद्धिं वारयित्वा विशेषणांशासिद्धिं वारयति—**नापि कादाचित्के**ति । सपक्षे—सौदामिनीज्ञाने । **प्रत्यक्षानुपलम्भाभ्यां व्याप्तिसिद्धेरिति** । सौदामिनी क्षणमाविर्भूय तिरोभवति तामनु तद्ज्ञानमपीति प्रत्यक्षम् । सौदामिन्याः प्राक् पश्चाच्च न तज्ज्ञानोपलम्भ इत्यनुपलम्भः ।

35-20 **कादाचित्कज्ञानस्यचाकादाचित्ककारणादुत्पत्तावित्यादि** । कादाचित्कस्यापि ज्ञानस्य स्यादकादाचित्कोऽप्यर्थः कारणम्, इति चेत्, तथासति कदाऽपि कादाचित्कादर्थान्न स्यात्, कारणस्याकादाचिकत्वाभ्युपगमात् । ननु अकादाचित्कादपि स्यात् कादाचित्कादपीति चेत् तर्हि अनियतकारणतापत्तेरहेतुकतैवापतदिति भावः ।

35-21 **तथाऽप्यनैकान्तिकत्व** इति । सौदामिन्यां तद्ज्ञाने च प्रत्यक्षानुपलम्भाभ्यां साध्यहेत्वोः साहचर्यनियमे सत्यप्यन्यत्रानैकान्तिकतैवेत्याशयः । **प्रसिद्धधूमादिरपी**ति । महानसादौ वह्निधूमयोः साहचर्यनियमे सत्यपि, अन्यत्र विनैव वह्निं धूमः किं न स्यादित्यनैकान्तिकताशङ्का तत्रापि प्रसजेदिति भावः ।

35-22 **अपिचेत्यादि** । कारणमहमर्थोऽकादाचित्कः, कार्यस्त्वहंग्रहः कादाचित्क इत्येतन्नोपपद्यते, कारणस्य कार्यजनसमर्थस्य नित्यात्वेन सर्वदैवाहंग्रहोऽप्युत्पद्येति । **कारणस्य कुर्वद्रूपत्वात**—कार्यनिष्पादनसामर्थ्येन कारणं कार्थरूपं कुर्वदेव स्यात्, अकरोत्कार्यं करिष्यतीति वेति नैवेति भावः । कार्यमकुर्वतोऽपि तिष्ठतस्तु कारणत्वमौपचारिकमेवा-

पतेत् । एकमेव कुर्वदपि भवेत्, अकुर्वदपि भवेदिति व्याहतं, तयोर्भेदनियमात् अभेदे तु स्वभावैक्येन कुर्वतोऽप्यकुर्वतोऽपि स्यादेव कार्योत्पत्तिरिति भावः ।

35-25 **किञ्चाहङ्कारस्येति** । अकादाचित्कस्यैवात्मनः कादाचित्काहंग्रहोत्पादकत्वे एकेन तेन क्रमाद्यावन्तोऽहंग्रहा उत्पाद्यन्ते ते सर्वे युगपदुत्पद्येरन् । करणस्य जागरूकत्वात् न च सामग्रीवैकल्यम् । सामर्थ्ये कथं सामग्रीवैकल्यम्, कारणान्तरसापेक्षत्वे तु नैव सामर्थ्यमिति भावः । नन्वात्माहंग्रहहस्यालम्बनमात्रम्, अन्यदेव तु कारणमित्याशङ्कामनूद्य निरस्यति— **नन्वहंकारस्ये**त्यादिना । कारणतातोनातिरिच्यते आलंबनतेति भावः ।

35-28 एवं पराभिमत आत्मा निरस्तः । अथाकाशं निरस्यति—**अथ किमाकाश**मित्यादिना । अयमाशयः—सौगतैकदेशिनो वैभाषिका आकाशं वस्त्विति मन्यन्ते, वस्तु वा तदवस्तु वेति विचारयन्तो वयमवस्त्वेवेति ब्रूमः—वस्तुना ह्यर्थक्रियासमर्थेन भाव्यम्, अन्यथात्ववस्त्वेव तत्, नचाकाशेन भवति काऽप्यर्थक्रिया । ननु—अवकाशप्रदान-लक्षणार्थक्रियासामर्थ्यमस्ति तस्येति चेन्न । यत्र सप्रतिघं वस्तु घटपटाद्यस्ति, तत्र सद-प्याकाशं नावकाशाधाने प्रभवति, अथ तेषु सप्रतिघेषु असत्सु तेषामभावादेवावकाशः सिद्ध इति किमाकाशेन, सप्रतिघवस्तुविरहान्नचातिरिच्यते कश्चिदवकाश इति । तदेकं विभुनित्यमाकाशमित्यनुपपन्नम् । घटादिवदपसरणोपसरणाभ्युपगमे परिच्छेदापत्तिः । सप्रतिघवस्तुसंनिधानासन्निधानाभ्यां नाशोत्पादाभ्युपगमे तु नित्यैकता व्याहन्येतेति ।

36-4 अथ वैशेषिकाभिमताकाशसमर्थनप्रकारं निरस्यति—**परैस्त्वि**त्यादिना । **समानदेशत्वात् सर्वशब्दाना**मिति । नित्यमेकं विभुमाकाशमिच्छतां शब्दस्य तदाश्रयतां च स्वीकुर्वतां जायमानस्य सर्वस्य शब्दस्याकाश एव देश इति अस्य शब्दस्यायं देशः तस्य तु स देश इति देशविभागस्य वक्तुमशक्यतया देशविभागेन शब्दश्रवणं नोपपद्येत, यः श्रोत्राकाश उच्यते स चाकाशान्नातिरिच्यते इति नायं श्रोत्राकाशस्य संनिहितः शब्दः अयमेव तु सन्निहित इत्याश्रयाकाशे प्रदेशभेदकल्पनस्यानुपपन्नत्वात् सर्व एव शब्दाः श्रूयेरन्, यदि व्यवहितो न श्रूयेत, तर्हि तदन्यः सन्निहितो य उच्यते सोऽपि न श्रूयेत, देशभेदस्य दुर्वचत्वात् । यदि श्रूयेरन् सर्व एव श्रूयेरन् न चेन्नैकोऽपीति भावः । तदिदं दूषणं शब्दस्य क्रमोत्पत्त्यनुपपत्तेरप्युपलक्षकम् ।

उक्तं च कमलशीलेन—'यदि हि नित्यैकनभोद्रव्यसमवेता अमी स्युः, तदा सकृदुत्पन्नानेकशब्दवत् अतत्काला अपि शब्दा अभिमतकाल एव स्युः । अविकलकारणत्वात्, एकाश्रयत्वाच्च । न च नित्यस्य परापेक्षाऽस्ती'ति । (तत्वसं. पं. प. २०८)

36-7 **दिक्कालयोश्चैकत्वा**दिति । दिश एकत्वाभ्युपगमात् कालस्य चैकत्वाभ्युपगमादित्यर्थः । नित्यत्वविभुत्वाभ्युपगमस्योपलक्षकम् । **एतेनेति** । आकाशकालदिशां निरसनेनैवेत्यर्थः । निरसनयुक्तेरेकप्रकारत्वादिति यावत् । या तु मनःसाधने परैर्युक्ति-र्निरूपिता तामनूद्य निरस्यति—**युगपद्ज्ञानानुत्पत्त्ये**त्यादिना । अयमाशयः—यदि मनो नेष्येत ज्ञानानां चाक्षुषादीनां यौगपद्यमापद्येत । आत्मनो विभोश्चक्षुरादीन्द्रियैः सह सदैव संभवात् करतलसन्निहितस्य कुसुमादेश्चक्षुःस्पार्शनादीन्द्रियसंप्रयोगस्य युगपत् संभवात् । मनसि चेन्द्रियेऽभ्युपगम्यमानेऽणोस्तस्य युगपदनेकेन्द्रियसंयोगस्यासंभवाद्

इन्द्रियमनःसंयोगस्यापि प्रत्यक्षे हेतुतया न ज्ञानानां यौगपद्यप्रसङ्ग इति वैशेषिका मन्यन्ते। अत्रोच्यतेह—ज्ञानानां यौगपद्यं नेत्येतल्लोकानुभवविरुद्धम्। नर्तकीं पश्यन्तो हि तस्या रूपं गानं च युगपदेव साक्षात्कुर्वन्तः कमप्यह्लादमनुभवन्ति, मनश्चेदणु किमपीन्द्रियमिष्येत, लोकानुभवसिद्धस्य ज्ञानयौगपद्यस्य व्याहतिरेव स्यात्तन्नास्त्येव पराभिमतं मनः, इति मनो न ज्ञानादन्यत्। चित्तं मनो ज्ञानमित्यनर्थान्तरमित्यसकृदुक्तम्

किञ्च–

ज्ञानानां यौगपद्येऽपि लोकसिद्धे द्विषन्नयम्।
प्रकल्पयन्मनो नित्यमिष्टहानिं न पश्यति॥
कारणस्य तु नित्यत्वे कार्ये क्रमिकता कथम्।
नान्यापेक्षा समर्थस्य नासमर्थस्य हेतुता॥
अयौगपद्यं ज्ञानानां नैव सिद्ध्येदभीप्सितम्।

उक्तं च शान्तरक्षितेन—

'नित्ये तु मनसि प्राप्ताः प्रत्यया यौगपद्यतः।
तेन हेतुरिह प्रोक्तो भवतीष्टविघातकृत्'॥

इति (तत्त्व० २०९)

36-11 **पृथिव्यादयोऽवशिष्यन्त** इति। निरसनीया इति यावत्। **अवयविपरमाणुभेदेन द्विविधा** इति। द्वयणुकादयोऽवयविनः, तदारम्भकाश्च परमाणवः। **अनुपलम्भो बाधक** इति। अवयवेभ्योऽतिरिक्तस्यावयविनःपटादेरनुपलम्भस्तदङ्गीकारे बाधकं प्रमाणम्। यदि स्यादुपलभ्येत नोपलभ्यतेतु पटो नाम कश्चित्तंतुभ्योन्यः, तथा कपालाभ्यां भिन्नो घटः; एवं तन्तुकपालादयोऽपीति भावः। अत्रायं प्रयोगः — यदुपलब्धिलक्षणप्राप्तं सद्यत्र नोपलभ्यते न तत्तत्रास्ति, यथा क्वचित्प्रदेशविशेषे घटादिरनुपलभ्यमानः, नोपलभ्यतेचावयवेभ्योऽर्थान्तरभूतस्तत्रैव देशे, उपलब्धिलक्षणप्राप्तश्चाभिमतोऽवयवी'ति।

36-14 ननूपलभ्यते घटोऽयमेक इतित्याशङ्कते-**यद्यवयवी नास्तीति**। **एकत्वेनेति**। एकत्वं हि भासमानमवयविनमतिरिक्तमेव गमयति। अन्यथाऽणुषु प्रतीयमानेषु तदनन्वयात्। आप्तवचनोपन्यासमुखेन शङ्कां परिहरति—**भागा एव** हीति। यश्चायमतिरिक्तावयविवादिनां व्यवहारः—अयमवयवी पटः, अस्य भागा अंशा इमे तन्तवः, तैश्चायं भागवानिति, तदनुरोधेन निर्देशो भागा इति। भागा एव भासन्ते चाक्षुषे, न तु तेभ्योऽन्यो भागवान—भागैरारब्धः, स्वयं निर्भागः — अखण्डः कश्चित् प्रतीयते इत्यर्थः।

भागा एव हि भासन्त इत्येतत् प्रश्नप्रतिवचनमुखेन व्याचष्टे **ननु कोऽयमि**त्यादिना। **सञ्चितपरमाणुप्रतिभासएवे**ति। पुञ्जीभूतपरमाणुप्रतिभास एवेत्यर्थः। नानादिग्देशावष्टम्भेन बहवः परमाणवः एकस्मिन् स्थले पूर्वपश्चिमदक्षिणोत्तरोर्ध्वाधोलक्षणनानादिग्देशावष्टम्भेन स्थिताः पुंजीभूता उच्यन्ते

36-18. शङ्कते–**यद्येव**मिति । वचनस्य हार्दमजानतः शङ्केयम् । अज्ञानमेवोपपादयति–**अर्थस्य स्वरूपेण नास्ति वेदन**मित्यादिना । अर्थस्य–स्थूलादेः स्वरूपेण–अर्थात्मना नास्ति वेदनम्, किन्तु वित्तिरेवार्थात्मना भासते इति । तत्र वचनमाह–**भाक्तं स्यादर्थवेदन**मिति । अर्थस्य वेदनमित्येतद्भाक्तं स्यादिति भावः । स्थूलप्रतिभासस्यान्यथासिद्धिमाह–**तस्मादिति** । स्थूलावभासो भ्रम इत्युक्तं भवति । एवमेव तु भदन्तशुभगुप्तो मन्यते, अनूद्यते च शान्तरक्षितेन–

‘तुल्यापरक्षणोत्पादादयथा नित्यत्वविभ्रमः ।
अविच्छिन्नसजातीयग्रहे चेत्स्थूलविभ्रमः ।’

इति ( तत्त्व० ९९२ )

36-22. ननु–अवयविनोऽनभ्युपगमे स्थूलोऽयं नीलोऽयमिति चाक्षुषं कथमुपपद्यते, तत्राह–**येऽपि तदारम्भकाः परमाणवो वैशेषिकाणा**मिति । तदारम्भकत्वेन वैशेषिकैरभिमता इत्यर्थः । **साक्षादक्षिगोचरा वैभाषिकाणां दर्शन** इति । बाह्यार्थमात्रनिरसने प्रवृत्तानां परमाणूनां दृश्यत्वसमर्थनं साक्षान्नात्यन्तमपेक्षितम् । अवयविसमर्थनाय प्रवृत्तं प्रति प्रतिवक्तव्ये सयूथ्यानां मतेनेदमुच्यते इति भावः । वैभाषिकेभ्यः सौत्रान्तिकानां विशेषमाह **स्वाकारसमर्पणे**ति । अथ बाह्यार्थान्निरस्यन्नाह–**तेऽपि योगाचाराणां मते न सन्ती**ति । **न खल्वेक** इति । अयमाशयः — प्रत्येकं भिन्नभिन्नाः परमाणवोऽसङ्ख्याताः पुञ्जात्मनाऽवस्थिता दृश्यन्ते, प्रत्येकं स्वातन्त्र्येण नैषां कदाचिदपि स्थितिः, संहता एवोत्पद्यन्ते संहता एव नश्यन्ति, अतएव पुञ्जावस्थायां दृश्यमानानां प्रत्येकमवस्थितौ कुतोऽदृश्यतेति शङ्काया नावकाशः । तथाचोक्तं–

प्रत्येकपरमाणूनां स्वातन्त्र्ये नास्ति संभवः ।
अतोऽपि परमाणूनामैकैकाप्रतिभासनम् ॥

इति (तत्त्व सं । पं. प० ९९१)

इति बाह्यास्तित्ववादिनो मन्यन्ते । अत्रेदं विमृश्यते—समुदिता एव जायन्तां समुदिता एव नश्यन्तु, परमत्रैवं खलु वक्तव्यम्, अयमेकः परमाणुरयमेकोऽयमेकः समुदिताश्चैते इति । तत्रेदं पृच्छामः–अयमेकः परमाणुरिति कथं सिद्धयेत्, सोऽपि विचार्यमाणो नैको भवितुमर्हति, कस्मात्? उच्यते–यो हि परमाणुः परमाणुमध्यमध्यास्ते स चतुर्षु पार्श्वेषु अधरोत्तरं च परमाणुभिः संसृष्ट इति दिग्भागभेदेन षडंशतापत्त्या नैकतापत्तिरनतिलङ्घनीयैव । स हि मध्यगतः परमाणुः पार्श्वे परमाणौ येन स्वभावेन संसृजते, न तेन स्वभावेन ऊर्ध्वाधःपरमाणुना संसृज्यते, येन स्वभावेन ऊर्ध्वाधःपरमणुभ्यां संयुज्यते न तेन पार्श्वपरमाणौ, । यदि विना स्वभावभेदं संसृज्येत, दिग्भेदकृतभेदस्य दुर्निरूपतया एकदेशतापत्तेः प्रचयो न सिद्धयेत् । तथाच मध्यावस्थितपरमाणुमात्रं पिण्डः स्यात् । परमाणूनां मिथः संयोगोपपादनक्लेशादाभिमुख्यमात्रं चेत् मध्यस्थपरमाणुनामिष्येत, तदाऽप्यस्माद्दोषादनिर्मोक्ष एवेति ।

36-30. प्रकारान्तरेण दूषयन्नाह–अथ **चायं विचार** इति । **नाप्यनेकः परमाणु**रिति । अयमाशयः – ननु नैकस्वभावोऽयमणुः, अतो नैक इत्येव ब्रूमः न परमाणुरथाप्यनेक इति

स्याद् तम्। कस्मात् ?, परमाणोः – परमाणुतयाऽभिमतस्यान्यैः सह परमाणुभिः परमाणुशः ––अत्यन्ताणुशः सयोगस्यासंभवात्। परमाणुतयाऽभिमतस्य कथं ततोऽप्यणुशः संयोगः स्यात्। संयोगश्च संयुज्यतामंशत एव भवति, तस्माद्यसौ सांशः कथं परमाणुरुच्यते। अथ चेन्निरंशः संयुज्यते इत्युत्युच्येत सर्वतः संयोगात् परस्परमभिन्नदेशतया पिण्डः परमाणुमात्र एव स्यात्। पर्वतः क्षितिमात्रश्च स्यादिति।

37-4 **तयो**रिति। पिण्डपरमाण्वोरित्यर्थः। स्वभावानामिति। परमाणुस्वभावानामित्यर्थः। स्वोक्तदूषणे आप्तवचनं संवादयति–षट्केन युगपद्योगादिति। व्याख्यातप्रायमेतत्।

आह चेदं शान्तरक्षितः —

संयुक्तं दूरदेशस्थं नैरन्तर्यव्यवस्थितम्।
एकाण्वभिमुखं रूपं यदक्षणोर्मध्यवर्तिनः॥
अण्वन्तराभिमुख्येन तदेव यदि कल्प्यते॥
प्रचयो भूधरादीनामेवं सति न युज्यते।
अण्वन्तराभिमुख्येन रूपं चेदन्यदिष्यते।
कथं नाम भवेदेकः परमाणुस्तथासति।

इति (तत्त्व० ९९९)

37-9 ननु कथमसत्यालम्बने नीलपीताद्यवभासः। कथमसत्यर्थे स्वाप्नावभासः। ननु वासनया। तयैवात्रापि। ननु स्वाप्नेऽर्थदौर्घट्यम्। इहापि तत्समानम्। अविचारयतां त्वर्थसौलभ्यम्। विचारयतां तु दौर्घट्यमेव। दौर्घट्यं च निरूपितमित्याशयेनाह —**यदि बाह्योऽर्थ** इत्यादिना।

37-16 ननु––हन्त स्वाप्नजागरयोरविशेषप्रसङ्गः, को विशेषमाचष्टे, दोषे स्यान्नाम विशेषः, स्वाप्नादविशिष्टमेव तु जाग्रज्ज्ञानमपि। भवति चात्र प्रयोग इत्याशयेनाह–– **नच स्वाप्नजाग्रदनुभवयो**रित्यादिना। **अनालम्बनादनवाप्तरूपविशेष**मिति। अनालम्बनतयाऽनवाप्तरूपविशेषमित्यर्थः। **यथैकस्मादाकाशकेशदर्शना**दिति। चाक्षुषदोषवशात् दृश्यते नभसि केश इव भ्रमन्, तदिदमाकाशकेशदर्शनम्। न चाकाशं वस्तु, न वा तत्र केशः, तत् बाह्यालम्बननिरपेक्षः कोऽप्ययं विज्ञानविलास एवाभासः। विशेषश्चायमन्यतो भ्रमादनपोह्योऽन्यैरपि। अतएवेदमुदाहरणमादृतम्। द्वितीयमिति। यन्नभसि केशदर्शनं तस्मादन्यत् द्वितीयम्।

37-21 ननु––असति बाह्येऽर्थे किं तर्हि सत् भवतः, विज्ञानमात्रं तु परमार्थसत्, इत्याह––**यदी**त्यादिना। अत्र प्राचां संवादमाह––**यथोक्त**मित्यादिना। ग्राह्यग्राहकनिर्मुक्तम्––ग्रह्यग्राहकभावनिर्मुक्तम्।

37-25 नन्वसति ग्राह्यग्राहकभावे, ज्ञानं केन प्रकाश्येत ? स्वेनैव प्रकाशते। अतो नास्य ग्राह्यभावोऽपीत्याह––**नान्योऽनुभाव्यो बुद्धयाऽस्ती**त्यादि।

अत्रायं सङ्ग्रहः––निरूपितश्चास्माभिरन्यत्र––

'सेयं विज्ञानधारा गगनतलगतालोकवत् स्वप्रकाशा
नानाकारावभासा स्फुरति बहुविधा स्वाप्नवद्वासनातः ।
ग्राह्यत्वग्राहकत्वद्वयरहिततया ज्ञप्तिमात्राऽद्वितीया
सूते सैवेयमेका व्यवहृतिमखिलां स्वान्यबाह्यानपेक्षा ॥
गृह्णाति ज्ञानमर्थानिति जगति मतो ग्राहकत्वस्वभावः
संवृत्त्यैव प्रवृत्तो नतु विषयितया वस्तुतस्तेन शून्यम् ।
नाप्यात्मग्राहकं तत् परमजडतया स्वप्रकाशैकरूपं
तच्चाविच्छिन्नधारं प्रवहति सततं सत्त्वभेदानन्तम्' इति ।

38-1 विज्ञानमात्रवादिषु केचन विज्ञानमेव वासनावैचित्र्येण नीलपीतादिविविधाकारं भूत्वा भासते इति, अपरे तु वस्तुतो निराकारमेव तु तत्, अविद्यया नीलपीतादिविविधाकारमिव भासते, तद्वासनावशादवभासमानोऽपि नीलपीताद्याकारः सांवृत एवेति । पक्षद्वयेऽप्यस्मिन् ग्राह्यग्राहकभावराहित्यं विज्ञानस्य संप्रतिपन्नमेवेति विज्ञानस्वभावपर्यालोचनया बाह्यार्थग्राहकता विज्ञानस्येत्येतद्दूरोत्सारितमित्याह—**तत्र केचिदित्यादिना** ।

38-8 अथ माध्यमिकानां मतमाह—**माध्यमिकानां त्वित्यादिना** । **न चास्य विचारतः कश्चित् स्वभावो घटते एको वाऽनेको** वेति । विज्ञानमात्रवादीना परमाणौ बाह्यतया परैरभिमते किमयमेकस्वभावः—उत नैकस्वभावः (एकरूप उत नैकरूपः) इति उभयत्राप्यनुपपत्तिरुक्ता सेयमनुपपत्तिर्विज्ञानमात्रवादेऽपि तुल्यैवेत्याशयः । तदिदमुपपादयिष्यति। प्रथमं विज्ञानस्याप्यवास्तवत्त्वे आप्तवचनानि संवादयति—**यथोक्तमित्यादिना** ।

38-12 **एकानेकस्वभावेनेति** । वस्तुना ह्येकस्वभावेन अनेकस्वभावेन वा भाव्यम्, अतथाभूतस्य तु व्योमारविन्दवदसत्त्वतैवेति भावः । **भावा येन निरूप्यन्ते** इति । भावाः—बाह्या आभ्यन्तरश्च ।

38-17 **यदा त्विति** । विकल्पस्य—सविकल्पस्य निश्चयात्मकस्य, अन्यस्य—नामजात्यादिकल्पनारहितस्य प्रत्यक्षस्य यदा प्रमाणता नास्ति । प्रामाण्यं हि तस्य वस्तुत्वे, एकानेकस्वभावराहित्येनावस्तुत्वात् क्व प्रामाण्यावसरः । अथ प्रमाणमेव यदा विचार्यमाणं विशीर्यते तदधीनसद्भावस्य सर्वस्यान्यस्य क्व वस्तुता, तदेवं सर्वस्मिन् विशीर्यमाणे कोऽपराध्यतु । भावानां शून्यतैव स्वभाव इति तौल्यान्नैकस्याक्षेपावसरः । ननु अयं बद्धोऽयं मुक्त इति व्यवस्थाऽपि व्याहन्येत । सत्यम् । इयं व्यवस्थाऽपि संवृत्त्यैव न परमार्थत इति । निःस्वभावतैव च शून्यता ।

उक्तं चैतदन्यत्रापि—

' निःस्वभावा अमी भावास्तत्त्वतः स्वपरोदिताः ।
एकानेकस्वभावेन वियोगात् प्रतिबिम्बवत्, ॥

इति । तर्हि किं तत्त्वम्—

' न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका जगुः ॥ '

38-21 स्वभावराहित्याद्भावानामपारमार्थ्ये प्रयोगं प्रदर्शयति—**प्रयोगः पुनरेवमिति एकानेकस्वभावं न भवतीति** । एकस्वभावमनेकस्वभावं वा यन्न भवतीत्यर्थः । **व्यापकानु-**

